# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२० वर्षे, २ अङ्कः

संवत् २०२२

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

श्रीवलदेव उपाध्यायः, साहित्याचार्यः, एम० ए० ।




२० वर्षे, २ अङ्कः

संवत् २०२२

# विषयानुक्रमणिका



## समालोचनम्



## सम्पादकीयम्

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२० वर्षः | भाद्रपूर्णिमा, संवत् २०२२ | २ अङ्कः

# गोरात्मकथा

## ( गोरात्मवृत्तकथनम् )

श्रीबलदेव उपाध्यायः, अनुसन्धान-संचालकः, वा० सं० वि० वि०, वाराणसी ।

अद्याहं स्वात्मकथां श्रावयितुमुद्यतास्मि। मद्विषये लोकेष्वनेका भ्रान्तयः, अन्धतामिस्रादपि कलुषतरा भ्रान्तयः प्रसृताः सन्ति। ता निराकर्तुमेवायं मम लघुः प्रयासः। सुदृढं विश्वसिमि यन्ममास्या आत्मकथायाः सर्वेऽपि पाठका मम वास्तविकं स्वरूपं परिचेष्यन्ति, समेषां मानवानामुपरि मदुपकृतीनां दीर्घपरम्पराया ज्ञानेन चमत्कृताश्च भविष्यन्ति; मम पवित्रतारहस्यस्य ज्ञानं तान् अभिभूतान् स्फरिष्यति। सम्प्रति मां प्रति क्रियमाणानां नृशंसतापूर्णव्यवहाराणां विषये घृणा चावश्यं भविष्यति।

अनया सृष्ट्या सह ममाविच्छेद्यः सम्बन्धोऽस्ति। यदा कदाचिदस्मिन् जगतीतले धार्मिकं सन्तुलनं पर्याकुलं भवति; धर्मस्य स्थानेऽधर्मस्य, पुण्यस्य स्थाने पापस्य, सदाचारस्य स्थाने कदाचारस्य पक्षः प्रबलो भवति, सर्वत्र त्रायस्व त्रायस्वेति आर्तनादो नभोमण्डलं भिन्दन् निखिले जगति गुञ्जायमानो भवति; तदा विषम-पापभाराक्रान्ता पृथिवी मामकं रूपं धृत्वा जगन्नियन्तारं सर्वशक्तिमन्तं भगवन्त-

मुपगम्यैतद्भारापनोदनार्थं प्रार्थयते। ममैव प्रार्थनया भगवतः प्राकट्यं भवति, अधर्मस्य च नाशो भवति, तथा धर्मस्य ध्वज उच्छ्रितो भवति। विश्वस्मिन् विश्वे विश्वम्भरस्य व्यापकतेव मदीया व्यापकता माननीया वर्तते, तथा क्षितितलस्य सकलास्वार्यभाषासु मदीयं नाम प्रख्यातमस्ति। भाषाणां जनन्या देवगिरा यन्मम सुन्दरं मधुरं चाभिधानं प्रस्तुतं तत् 'गौः' इत्यस्ति। 'गम्' धातोः 'डोस्' प्रत्ययेन निष्पन्नमिदं नाम मह्यं सर्वाधिकं रोचते; यतो ह्दिं मम गत्यात्मकस्य स्वरूपस्य परिचायकमस्ति। मानवकल्याणार्थं सातत्येन जागरूकतायाः कथां स्ववक्षसा वहदिदं नाम विश्वस्याशेषभाषास्वद्यापि वर्तमानमस्ति। संस्कृतभाषाया गोशब्दः पाश्चात्त्यभाषासु कुत्रचिद् गकारस्य स्थाने ओष्ठ्यबकारवत्त्वेन, कुत्रचित् कण्ठ्यककारवत्त्वेन च परिणतो वर्तते। नायमवसर एतत्परिवर्तनान्तर्हितस्य भाषाशास्त्रीयनियमस्योद्घाटनाय, तथाप्यात्मनो विश्वव्यापकतां द्योतयितुं तस्य नियमस्य दृष्टान्तभूतानां शब्दानां मनाङ्निर्देशमावश्यकमवगच्छामि।

न खल्वाश्चर्यावहं प्राचीनयोः 'यूनानी-लातीनी' भाषयोः परस्परं साम्यम्, तयोरेकजातीयत्वात्। यूनानीभाषायां मम नाम तु 'बो' 'बोउस' वा वर्तते, यस्य लातीनीभाषायां बो (bo) बोस् (bos) बोव् (bov) चेति रूपाणि सन्ति, यतश्चाङ्गलभाषायां 'बोवाइन' इति विशेषणपदं (तद्धितान्तं रूपम्) व्युत्पाद्यते। 'आइरिश' भाषायां मम नाम एतदनुरूपमेव 'बो' इति वर्तते। लैतिनस्य 'बोवी' अपभ्रंश 'गावी' शब्दस्य, एवं ग्रीकस्य 'बोउबेलस' (boubalos) संस्कृत 'गवलस्'-शब्दस्य प्रतिरूपमस्ति। इण्डोजर्मनिकभाषान्तर्गतायां ट्युटानिकाख्यायामुपशाखायां मन्नाम्नो गकारस्य ककारतया विकृतिर्जागर्ति। जर्मनभाषायाः कूह् (kuh) शब्दः, आर्मिनियनभाषायाम् 'कोव' (kov) शब्दः, आङ्गलभाषायाः काउ (cow) शब्दश्चास्यैव परिवर्तनस्य द्योतकः। अनेन प्रकारेण यूरोपीयभाषासु मम नाम कुत्रचिद् गकारादि कुत्रचित् ककारादि चास्ति। स्पष्टमिदं यल्लेटिशभाषायाः 'गुओस' (Guovs) 'गौः' (गओस) इत्यस्य विकृतं रूपमस्ति। प्राचीनायाः चर्चस्लावभाषाया गोवेन्दो (Govendo) शब्दे तु संस्कृतस्य गोविन्द एव विराजते। भारतीयासु भाषासु तु सर्वत्र देववाण्या गोशब्दात् साक्षाद् निष्पन्नानि गकारादीनि नामान्येव मिलन्ति। मत्कथनस्य तात्पर्यमेतावदेवास्ति यद्यथाऽहं जगत्कल्याणार्थं भोजनस्य कृषेश्च साधनरूपेण विद्यमानास्मि, तथैव

मम नाम सर्वत्रैव आर्यभाषासु गोशब्दादेवापभ्रष्टत्वाद् मम गव्यात्मकरूपस्य पूर्णतया परिचायकमस्ति।

विश्वसंस्कृतेर्विशेषतो भारतीयसंस्कृतेरभ्युदये प्रसारे च मम यावान् व्यापकः प्रभावो वर्तते तावतो यथावन्निरूपणार्थं महद् ग्रन्थजातं संग्राह्यमुद्ग्राह्यञ्च भविष्यति। मदुपासकस्य व्रजनन्दनस्य तस्य 'गोपालस्य' स्तुतये कृष्णभक्तैर्गोपाल-सहस्रनामेति'पुस्तकस्य रचना कृता; विष्णुभक्ता 'विष्णुसहस्रनाम', शैवाः 'शिवसहस्रनाम' कालीभक्ताश्च कादिमतस्य हादिमतस्य च पुष्टये 'ककारादि-कालीसहस्रनाम' 'हकारादिकालीसहस्रनाम'इत्यादीनि पुस्तकानि रचितवन्तः, परन्तु केनापि मद्भक्तेन गोसहस्रनामेति कस्यचिदपि ग्रन्थस्य प्रणयनं नाद्यावधि कृतमिति मच्चेतोऽतितरां दुनोति। तत् किं मम नाम्नां माला न ग्रन्थितुं शक्यते? तत् किं ममाभिधानानामेतादृश्यल्पता वर्तते यदष्टोत्तरशतकमपि न कर्तुं शक्यते? 'सहस्रनाम' दूरे तिष्ठतु।

अस्त्येकमुत्तरमेतेषां प्रश्नानाम्। 'नहि, कदापि न'। न ममाभिधानेऽल्प-संख्यता, न च तेषां सार्थकतायामभावश्चास्ति; अल्पता तु तेषां संस्कृतज्ञानां श्रद्धाया-मस्ति ये वेदादारभ्य पुराणानि यावत्, इतिहासान् प्रभृति तन्त्रपर्यन्तं च मम विश्व-विश्रुतकार्यकलापानधीयाना अद्यप्रावधि गोसहस्रनामगुम्फनेन कृतकार्या भवितुं नाशक्नुवन्। तदागम्यताम्, अहं स्वयमेव केषाञ्चिन्मम नाम्नां सङ्केतं तात्पर्यञ्च व्यनज्मि, यथा मम सहस्रनामरचनायां साधारणेनापि संस्कृतज्ञेन क्लेशो नानुभूयेत। मम सर्वप्राचीनं सर्वसुलभं च नाम 'गो' (गौः) इत्यस्ति, यस्य व्यापकताया रहस्यमनुपदमेवोद्घाटितम्। यदा मयि प्रजननशक्तिर्न तिष्ठति तदा मम 'वशा' इति संज्ञा भवति। यदाहं गर्भधारणसमर्था भवामि तदा मम 'उपसर्या' इति नाम भवति। तथा मयि वृषस्यन्त्यां जातायां सम्पन्नमैथुनायां च मम यथार्थ-मभिधानम् 'संधिनी' इति भवति। गर्भधारणावस्थायां ममानेकानि रोचकानि नामानि जायन्ते। यदि मम गर्भः स्रवन्निःसरति वहिर्मच्छरीरात् तर्ह्यवतोकेत्यहमुच्ये। यदि मम गर्भस्योपघातो भवेत्, तर्हि मम नाम 'वेहद्' इति भवति। यदाहं प्रथमगर्भं बिभर्मि, तदाहम् 'प्रष्ठौही' इति नामधेया भवामि; यदा मम प्रसूतिः प्रतिवर्षमुत्पन्ना भवति, तदा ममैकं विचित्रं नाम भवति 'समांसमीना' इति, यत् पाणिनिव्याकरण-नियमविशेषेणैकेन सिध्यति। बहुशः प्रसवे जाते ममाभिधानं 'परेष्टुका' भवति।

यदि धेनुशब्दो मम नवप्रसूतात्वस्य द्योतकः, तर्हि वष्कयिणीशब्दश्चिरप्रसूतात्वस्य सङ्केतकोऽस्ति। भवद्भिर्ज्ञातमेव भवेद् यद् वष्कयिण्या दुग्धमतिगाढम्, अतिमधुरम्, अतिपौष्टिकं च भवति। काशीमण्डलस्य भोजपुरीभाषायां बकेनेति नाम्ना प्रथितमप्यस्ति। ('खिलल बा बकेनवा क दूध'—भोजपुरीगीतस्यैकं पदम्।) सुखेन दुह्यमानायां सत्यां मयि 'सुव्रता', स्थूलस्तनायां सत्यां मयि 'पीनोघ्नी', मम दुग्धे द्रोणपरिमाणे जाते 'द्रोणक्षीरा' इति मे सार्थकं नाम भवति। इमानि तु लौकिकसंस्कृते मदीयनामानि सन्ति। वैदिकसंस्कृते वर्तमानान्येतद्भिन्नानि, एतदितरभावाभिधायकानि च नामानि मम प्राचीनताया दिव्यतायाश्च स्पष्टानि द्योतकानि सन्ति।

वैदिकं साहित्यं मम नामभिः कर्मभिश्च पूर्णं वर्तते। तस्मिन् काले मम स्तनेष्वेतावत् प्रचुरं दुग्धं भवति स्म, यन्मां त्रिर्दोहनस्यावश्यकता भवति स्म; एषां त्रयाणां दोहनानां च विभिन्नानि नामान्यासन्। प्रातःकालिकं दोहनं प्रातर्दोहेति नाम्ना, मध्याह्नात् किञ्चित् पूर्वं दोहनं संगवेति नाम्ना, सायंकालिकं दोहनं च सायंदोहेति नाम्ना प्रख्यातमासीत्। मम पृथक् पृथग् दशानां द्योतका अनेके शब्दा वैदिकग्रन्थेषूपलभ्यन्ते, येषु कतिपयानेवात्र सङ्केतयामि। वैदिकाः श्वेतां गां कर्कीति, प्रसोष्यमाणां युवतिं गां सकृत्प्रसूतां वा गां गृष्टिरिति, दुग्धवतीं गां धेनेति धेनुरिति वा, वन्ध्यां गाम् 'स्तरी' धेनुष्टरीति वा, प्रसूय वन्ध्यतां गतां गां सूतवशेत्याचख्युः। उपरते स्ववत्से वत्सान्तराय दुग्धार्थमनुनीयमानां मां वैदिका निवान्यवत्सां निवान्यां (शतपथ० २।६।१।६) अभिमान्यवत्साम्, अभिमान्याम्, केवलवान्यां वा (ऐतरेयब्रा० ७।२) आकारयन्ति स्म। सायंप्रातः स्ववत्सार्थं मदीयश्चीत्कारो वैदिकेभ्य ऋषिभ्य एतावत्कर्णसुखद आसीद् यत्ते देवताभ्यः प्रयुक्तैः स्वरमधुरैर्गायनैरपि तस्य तुलायां मनागपि न संचुकुचुः—

अभिविप्रा अनूषत गावो वत्सं न मातरः।<br>
इन्द्रं सोमस्य पीतये ॥

[ऋग्वेद ९।१२।२]

वैदिकयुगस्यैकां मर्मयुक्तां वार्तां कथयितुमहमिच्छामि। तस्मिन् युगे ममैतावदाधिक्यं प्राचुर्यं वासीद् यन्ममाभिज्ञानार्थं कर्णप्रदेशेष्वनेकप्रकाराणि चिह्नानि विनिर्मितानि भवन्ति स्म। एवं तैश्चिह्नैर्लाञ्छितायां सत्यां मयि मम पृथक् पृथग्

नामकरणस्यापि तस्मिन् युगे व्यवस्था आसीत्। इमानि प्रमुखानि चिह्नान्यासन्—अष्टाङ्कः, वंशी, दात्रम्, स्थूणा च। क्रमशो नामानि चेमानि भवन्ति स्म—अष्टकर्णी (ऋग्वेद १०।६२।७), कर्करिकर्णी, दात्रकर्णी, स्थूलाकर्णी च (मैत्रायणी-संहिता ४।२।९)। यदा कदा मम कर्णच्छेदनमप्यभवत् (छिद्रकर्णी)। अथर्ववेदानुसारं मम कर्णयोर्मिथुनचिह्नमपि चिह्नितं भवति स्म, यत् सम्भावये, प्रजननशक्तेः प्रतीकमासीत्। वैदिकयुगीनं वैशिष्ट्यमिदं पाणिनिकालपर्यन्तमतिप्रचलितमासीत्। यतो हि पाणिनिनापि स्वसूत्रे (६।३।११५) इमानि चिह्नानि समुल्लिखितानि।

(२)

मम पुण्यमयं जन्म तु मानवानां पुष्टेर्देवतानां पूजायाश्च निमित्तायैव। यदा सोमरसमिश्रितो मम रसो देवेभ्योऽर्पितः सन्नानन्दोल्लासस्य हेतुर्भवति, तदाहं स्वजीवनं धन्यं मन्ये। देवक्रियार्थता हि भौतिकजीवनस्य धन्यतापराकाष्ठा। मज्जीवनस्य प्रत्येकं कार्यं प्रति नियमोऽयं संघटते। अत एव वैदिकैर्ऋषिभिर्मम भूरि प्रशंसा कृता। भारद्वाजस्येमे पावनशब्दाः सर्वदा स्मरणीया भविष्यन्ति, यत्र तेन देवाधिदेवस्येन्द्रस्य साक्षात् प्रतिनिधित्वेनाहं वर्णिता—

गावो भगो गाव इन्द्रो मे अच्छान्  
गावः सोमस्य प्रथमस्य भक्षः।  
इमा या गावः स जनास इन्द्र  
इच्छामीद्धृदा मनसा चिदिन्द्रम्॥  
[ऋग्वेद ६।२८।५]

होमधेनुत्वाद्धेतोर्मम सर्वेषामृषीणामाश्रमेपूपस्थितिरासीत्। वसिष्ठाश्रमे 'नन्दिनी' ममैव वत्सतरी आसीत्, यस्याः सेवया राजा दिलीपो वंशस्य कर्तारं तनयं रघुं प्राप्तवान्। जमदग्नेराश्रमे सहसा समागतस्य हैहयनरेशस्य कार्तवीर्यस्य विशालसेनाया अभ्यर्थनायाः पवित्रमद्भुतं च कार्यं मत्पुत्र्यैव सुसम्पादितम्, या जमदग्नेर्होमधेनुरासीत्। मम रक्षार्थं राजानो ब्राह्मणाश्च स्वीयं सर्वस्वं विसृष्टवन्तः, परन्तु मामापन्नां नावालोकयन्। धन्यास्ति एतेषां महापुरुषाणां गोभक्तिः, परन्त्वद्यतने संसारे त्विमाः पौराणिकाख्यायिकाः—दिलीपस्य नन्दिनीरक्षणार्थं प्राणो-

त्सर्गः, परशुरामस्य च स्वपितुर्होमधेन्वा रक्षणार्थं मदान्धशासकानामेकविंशतिवारं हननम्-रोचकगल्पत्वेनाभिमताः, एतदधिकं महत्त्वं न दीयते। अहन्त्वेतद् भारतवर्षस्य दुर्भाग्यमेव मन्ये, यत् स्वप्रामाणिकमपीतिहासं काल्पनिकमेव मनुते। पौराणिकास्तु जना देवलोकस्य सर्वस्वभूता अखिलकामनानां पूर्तिविधायिकां कामधेनुं मूर्धन्यां मन्यन्ते, परन्तु मन्मते त्वहं मम समग्रा वत्सतर्यश्च कामधेनव एव सन्ति। 'लक्ष्मीर्वसति गोमये' इति वाक्यानुसारेण यस्या निकृष्टविष्ठायां पूज्याया लक्ष्म्या निवासः स्यात्, तस्या धन्यताया वर्णनमेव कथं भवेत्? अहं त्रैलोक्यसाम्राज्यादपि श्रेयसी। अत एव निषादैर्जालबद्धश्च्यवनस्त्रैलोक्यस्य साम्राज्यं न्यक्कृत्य गामेव स्वनिष्क्रयवस्त्वमन्यत। किमस्या महाभारतीयाः कथायाः पुनरुद्धारणमावश्यकम्? अद्य वैज्ञानिकयुगेऽपि समस्तनव्योर्वरकापेक्षया मम गोमय उर्वराशक्तिसंरक्षणकार्ये सर्वाधिकं कृतकार्यतां गतमित्येव तथ्यं गोमये लक्ष्म्या निवासस्य पोषकं प्रमाणमस्ति।

प्राचीनकालेऽहमेवासं विनिमयद्वारम्। कस्यचिदपि देशस्योन्नतिर्वाणिज्यमेवाश्रिता भवति, वाणिज्यं च विनिमयस्य द्वारमपेक्षते। सभ्यताया इतिहासे धातुजमुद्राया एवातिप्रचलनमस्ति, परन्तु पुराकालेऽहमेव समस्तव्यावसायिकप्रक्रियाणां साधनमासम्। मदभावे एकस्य देशस्य वस्तूनि तस्मिन्नेव देशे विकृतिं प्राप्नुयुः, तदितरदेशप्राणिनामुपभोगं मनागपि न साधयेयुः। मयैव वाणिज्यं निर्दिष्टम्, विनिमयस्य साधनं पुरस्कृतम्, आदानप्रदानयोश्च द्वारत्वम् स्वयमेव गृहीतम्, तदा कथञ्चित् सभ्यतायाः प्रसारो जातः। अनेन अधुनातनस्य वाणिज्यस्य जननीत्वस्य गौरवं मह्यमेव प्रदेयम्। मम प्रसन्नताया अयं विषयोऽस्ति यदनेका भाषा ममैतेन स्वभावेन परिचिताः सन्ति, स्वविशिष्टशब्दैः प्रयोगैश्च ताः कृतज्ञतां च ज्ञापयन्ति। पौरस्त्याः स्युः पाश्चात्त्या वा मदुपकृतिः कुत्रापि विस्मर्तुं न शक्यते। लातीनिभाषायाः पेकुस्शब्दस्य मम पशुरूपस्य वाचकत्वे सति धनरूपार्थस्यापि द्योतकत्वमस्ति, तस्मादेव शब्दान्निष्पन्नः पिक्युनिअरी ( Pecuniary ) शब्दोऽप्यापि धनसम्बद्धस्यार्थस्य वाचकोऽस्ति।

( ३ )

अस्मिन् विशालविश्वे आदिमायाः श्रेष्ठायाश्च भारतीयसंस्कृतेः प्रतीकमहमेवास्मि। अहं सरलतायाः, शुद्धतायाः, सात्त्विकतायाश्च मूर्तिरस्मि। किं तादृश्या भारतीयसंस्कृतेः कदापि कल्पनापि कर्तुं शक्यते, यस्यां मम प्राधान्यं न स्यात्,

मम प्रतिष्ठा न स्यात्, ममादरश्च न स्यात्। स्मर्यताम्, मम परिरक्षणमवदतः पशोः रक्षणं नास्ति, प्रत्युत नानादिङ्मण्डलमुखरितायाः प्राचीनसंस्कृतेः संरक्षणमस्ति। अहमेव मेरुदण्डोऽस्मि भारतवर्षस्य पावनसंस्कृतेः। ममैव गौरवगाथां बहुभिः शब्दैः प्रकटयन्ती देववाणी स्वकृतज्ञताभिव्यक्तौ मनागपि संकोचं नाञ्चति, परमहर्षस्य ममायं विषयोऽस्ति।

मया सह भारतस्य अनेका भव्यभावनाः सम्बद्धाः सन्ति। सा सुन्दरवेला यस्याः शुभकार्याणां सम्पादनं विहितमस्ति, मन्नामैवाश्रित्य 'गोधूलिः' इति कथ्यते। गोस्वामितुलसीदासेन स्वमानसे गोधूलिवेलायै 'धेनुधूरि'वेलेति संज्ञा प्रदत्ता।

धेनुधूरि बेला विमल सकल सुमंगल मूल।
बिप्रन्ह कहेउ बिदेहसन जानि सगुन अनुकूल॥
[ १।३१२।० ]

भगवतो रामचन्द्रस्य विवाहशोभायात्रा अस्मिन्नेव मुहूर्ते प्रस्थिता। अस्मिन्नेव समयेऽहं स्वसन्ततिभिः सह यवसस्थानात् परावर्तनं करोमि; अस्मत्खुरोत्थिता धूलिः पूर्णं नभोमण्डलं धूसरं करोति, इदमेव पवित्रं दृश्यमाश्रित्य सन्ध्यावेला 'गोधूलि' इति नाम्ना व्यपदिश्यते। अहं तु साहित्येऽपि बहु चर्चितास्मि। यस्मिन् समाजे सहृदया उपविशन्तः सरसचर्चां कुर्वन्ति, आनन्दं चानुभवन्ति, स मन्नाम आश्रित्य गोष्ठीति उच्यते। कस्यचिद् विशिष्टविषयस्य शोधननिमित्ताय प्रयुक्तो गवेषणाशब्दो मम तात्कालिकं स्वरूपं स्मारयति यदा अहं परमाभिलाषेषु मूर्धन्यत्वेनाभिमता आसम्। शिल्पशास्त्रमपि ममाधमर्णमस्ति। प्राचीनकाले हर्म्याणां वातायनानि मम सुभगलोचनाकाराणि वर्तुलानि भवन्ति। अत एव तेषां सामान्यमभिधानं गवाक्ष इत्यभूत्, यस्य विकृतानि रूपाणि 'गोखा' 'मोखा' इति हिन्द्याम्, 'मूका' इति भोजपुर्यां चाद्यापि व्यवह्रियन्ते। मम स्तना लम्बमानद्राक्षागुच्छानामुपमानतां साधयन्ति, अत एव द्राक्षा गोस्तनीति नाम्ना आकार्यते। मदभिधानानां द्राक्षाणामग्रे लघुफला द्राक्षा न तथाद्रियन्ते जनाः। आपणे तास्तदवस्था एव तिष्ठन्ति, माधुर्यभक्तास्तु मन्नामधेया एव द्राक्षा गृह्णन्ति। दुग्धं तु मद्विकार एवास्ति; मानवजातस्य शक्तिप्रदायकं दुग्धसामान्यं जना मन्नाम्नैव 'गोरस' इत्यभिदधति; तद्गुणकारि पात्रमपि गुरसी ( गोरसी भोजपुर्यां बोरसी वा ) इति सम्बोधने

मनागपि आश्चर्यं नोद्भावयन्ति। नाट्यशाला न मामुपेक्षितुं शक्नोति। मम पुच्छं सावधानमवलोक्यताम्। प्रथमं तु पुच्छं विस्तीर्य दीर्घं भवति, परन्तु शनैः शनैरल्पपरिमाणं जायते। एतत् सादृश्यमेवाभिलक्ष्य नाट्यशाला स्वीयमेकं विशिष्टसंघटनं गोपुच्छेति नाम्ना व्यवहरति।

पूजयोपासनया च सह ममाभिन्नः सम्बन्धोऽस्ति। यस्माज्जलपात्राद् भगवतो विश्वनाथस्योपरि जलं निपात्यते, यदन्तश्च कृत्वा मालां भगवन्नाम जप्यते, एतद्द्वयमपि मम लम्बायमानमुखाकृतित्वाद् गोमुखीत्युच्यते। भगवतः श्रीकृष्णस्य तन्नित्यं लीलाधाम यत्र स गोपिकाभिः सह प्रतिदिनमानन्दं विहारं कृतवान् मत्कारणादेव गोलोक इति कथ्यते। ममैतेषां रूपाणां विषये वैदिकेषु विद्वत्सु नैकमत्यमस्ति। केचिन्मन्यन्ते यदिमा गावः पशुजातिविशेषाः, अन्येषामयमाग्रहोऽस्ति यदिमा रविरश्मिरूपाः सन्ति। मम मते तूभयत्र याथार्थ्यं विद्यते, अत्र द्वैविध्यस्य अवकाश एव नास्ति। गोलोकस्तु वैष्णवानां सर्वस्वमेव, भगवतो विष्णोर्नित्यवृन्दावनलोकः, परन्त्वियं पौराणिकी कल्पना नास्ति, ऋग्वेदोऽपि गोलोकापरिचितो नास्ति। अत एव एको वैदिक ऋषिर्भूरिश्रृङ्गाणां शीघ्रगामिनीनां गवां निवासभूतस्य लोकस्य प्राप्तिं स्वजीवनस्य चिराभिलाषपर्यवसानं मनुते—

तदस्य प्रियमभि पाथो अश्यां
यत्र गावो भूरिश्रृङ्गा अयासः।

[ ऋग्वेद १।१५४।६ ]

नानादिशो विकीर्यमाणानां चित्रवर्णकानां रविरश्मीनां विचरणक्षेत्रत्वाद् विष्णोस्तृतीयं पदक्रमं गोलोकाभिधानस्य कारणं विद्वांसो मन्वीरन् नाम, परन्तु अहमिदं निवेदयितुमिच्छामि यत् तस्मिन्नूर्ध्वतमे लोके ममापि निवासोऽस्ति। कथं न स्यात्? यदा तत्परात्परं ब्रह्मैव मत्पालकत्वात् 'गोपाः' इति संज्ञयाभिधीयते ( विष्णुर्गोपा अदाभ्यः—ऋग्वेदः ), तस्य ब्रह्मणो लोकाद् मम बहिष्कारः कियान् अन्यायपूर्णोऽस्ति। ममैव रसस्य ( गोरसस्य ) परिणतं फलं गीताज्ञानोपदेशोऽप्यस्ति। मम रक्षणाद्धेतोरेव स नन्दनन्दनः 'गोपालः' 'गोविन्दः' चेति नामनी बिभर्ति। गोपेषु श्रेष्ठत्वात् स गोपेन्द्र इति कथ्यते; यत् संस्कृते प्राकृतनियमानुसारं विकृतं भूत्वा 'गोविन्द' इति जातम्।

एवमहं भारतस्याध्यात्मिकसंस्कृतेः प्राणभूतास्मि, तस्यामहं जीवनं फूत्करोमि। ममोपकारो नैव विस्मारयितुं शक्यते।

( ४ )

अत्याश्चर्यकरमिदं मे प्रतिभाति यत् सामान्यजनाः दूरे तिष्ठन्तु, तथाकथित-पण्डिता अपि मम वास्तविकस्वरूपं न जानन्ति, मद्विषये नानाविधा धारणाश्च तैरूरीकृता याः शब्दाज्ञानवशाद् वैयक्तिकस्वार्थवशाद् वाद्यापि प्रचलिताः सन्ति। एतास्वन्यतमा धारणास्ति यद् वैदिकयुगे मम वधः प्रचलित आसीत्, सोऽप्यतिथीनां विषये। एतद्धारणापोषकाः कतिपयशब्दा मन्यन्ते, येषामर्थानवबोधेन सर्वोऽप्ययमनर्थोऽनुष्ठितः। एवंविध एवैको बहुशश्चर्चितोऽतिथिप्रसङ्गे 'गोघ्नः' इति शब्दो वर्तते। व्याकरणपद्धत्या अस्य शब्दस्यायमर्थो भवति—'गावो हन्यन्ते यस्मै स गोघ्नोऽतिथिः।' एतां व्युत्पत्तिमाश्रित्य चलमनोभिः कल्पनाभित्तिर्निर्मिता यत् प्राचीनभारतेऽतिथिभ्यो गावो हन्यन्ते स्म। शिव! शिव!! कियत्यनर्थजननीयं कल्पनास्ति। मां प्रत्यस्मिन्नर्थे महती कृतघ्नताचरितैव, संस्कृतभाषाया ज्ञानस्य तीव्रमपमानं च कृतम्। सत्यमेतद्यदतिथीनां सत्कारसाधनमहं मत्पुत्र्यश्चासन्, यासां दुग्धमतिथिजनानां तृप्तेरुपकरणं भवति स्म। प्राचीनकालेऽतिथीनामादरार्थं गवां संग्राहक एको विशिष्टो महीपालोऽतिथिग्वनाम्ना अभिहितो भवति स्म (ऋक्० १।५१।६) अतिथीनां सम्बन्धे गवां सम्पर्कोऽनेन नूनं सिध्यति। अतिविलक्षणं तथ्यमिदमस्ति यद् वैदिकनिघण्टौ (२।१४) गत्यर्थकधातूनां मध्ये हन्धातोः पाठो लभ्यते, परन्तु वधार्थकधातुष्वस्योल्लेखः सर्वथा नैवास्ति। हन्धातोरर्थः केवलं हिंसैव नास्ति, प्रत्युत गतिरप्यस्ति। (हन् हिंसागत्योः)। 'हिंसा' सर्वत्र प्राणत्यागरूपैव न भवति, प्रत्युत सा आहननताडनादीनर्थानपि प्रकटयति। अतिथावुपस्थिते सति तेषां दुग्धपानार्थं वयमानीयमाना आस्म। आगमने काठिन्ये सति वयं ताड्यमाना अप्यास्म। इदं ताडनं न केवलं दुग्धार्थम्; दानार्थमपि भवति स्म। तस्मिन् युगेऽतिथीनां सत्कारः सम्मानश्च प्रकारद्वयेनापि क्रियते स्म—दुग्धप्रदानेन, दानद्वारा च। उभयथापि हठे कृतेऽस्माकं ताडनं क्रियते स्म। गोघ्नशब्दस्य व्युत्पत्तिलभ्येनानेनार्थेन कदापि भ्रान्तिर्न सम्भाव्यते (गां हन्ति ताडयति अतिथये दानार्थं ताडनद्वारा गमयतीति वा गोघ्नोऽतिथिः।)

२

महाभारतीयाया रन्तिदेवकथायाः सम्यग् ज्ञानाभावादेव भ्रान्तय उत्पन्नाः सन्ति। यच्छ्लोकमाश्रित्य सर्वोऽप्युपप्लवोऽस्ति, स एवमस्ति—

राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज।
द्वे सहस्रे तु वध्येते पशूनामन्वहं सदा॥

[ वनपर्व २०८।८ म० भा० ]

अनवबुद्ध्यैव मम हत्यादोषो जनै रन्तिदेवशिरस्यापातितः। अत्र श्लोकान्तिमचरणे पशूनां निर्देशोऽस्ति, न तु गवाम्। पशुसामान्याद् गोविशेषार्थो गृह्येतापि चेत्, तथापि मम वधो नैव सिध्यति। 'वध्येते' इत्यस्य बन्धनम् अर्थः, न तु वधः। अयं त्वनर्थ एव। महाभारतस्यैव साक्ष्याद् रन्तिदेवः सुदृढोऽहिंसाव्रती राजा आसीत्। महाभारते (अनुशासन ११५।७२-७७) अहिंसाव्रतिनां राज्ञामेका सूची समुपलभ्यते। तत्र रन्तिदेवस्यापि नाम सादरमभिलिखितमस्ति—

रैवते　　रन्तिदेवेन......................।
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम्॥

[ अनुशासनपर्व ११५।७७ ]

फलतः स्वयमहिंसक आसीद् रन्तिदेवः। कथमसौ स्वगृहागतान् पूज्यानतिथीन् भोजयितुं हत्यां समाचरेत्! रन्तिदेवो गवां वृषभाणां च महान् दाता आसीत्। द्रोणपर्वणि महाभारतस्येदं कथनं विश्वासार्हं न किम्—

सहस्रशश्च सौवर्णान् वृषभान् गोशतानुगान्।
अध्यर्धमासमददद् ब्राह्मणेभ्यः शतं समाः॥

[ द्रोणपर्व ६७।१०-११ ]

तुष्यतु दुर्जनन्यायेन यदि 'वध्येते' इत्यस्य हिंसनमेवार्थोऽभिमतः स्यात्, तथापि हिंसनं प्राणत्यागरूपं न मत्वा ताडनरूपं मन्तव्यम्। 'आलभ्यन्त शतं गावः' इति वाक्ये 'आलभ्यन्त' इत्यस्यार्थः 'हननम्' यत्क्रियते तदपि सुसङ्गतं नास्ति। शतादप्यधिकेषु स्थानेषु आपूर्वकस्य 'लभ्' धातोरर्थः 'स्पर्शः' इत्युपलभ्यते। 'हननम्' इत्यर्थकरणं सुदृढोऽन्यायोऽस्ति। द्वित्रान् दृष्टान्तानुपस्थापयामि—

( क ) ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च।

[ उद्योगपर्व ८३।१० ]

अत्र श्रीकृष्णस्य ऋषभपृष्ठस्यालम्भनम्, अर्थात् स्पर्शनमभीष्टमस्ति।

(ख) गामालभ्य विशुध्यति। [मनु० ५।८७]

नरकङ्कालस्य स्पर्शाज्जायमानाया अशुद्धेः परिहारो गामालभ्य भवति। अत्र मनोस्तात्पर्यं गोः स्पर्शनेनास्ति, न तु हिंसनेन।

(ग) विवाहसंस्कारे उपनयनसंस्कारे च वधूहृदयस्य माणवकहृदयस्य च क्रमश आलम्भनं निर्दिष्टमस्ति, यत् स्पर्शार्थस्य बोधकम्, न तु हिंसनस्य—

'अथास्मै हृदयमालभते।'

[पारस्करगृह्य० १।८।५; २।१६ सूत्रम्]

(घ) मीमांसादर्शने भाष्ये (१।२।१०) शवरस्वामिना आलम्भनस्यार्थः 'उपयोगः' इति कृतः, न तु मरणम्—

"अज इति अन्नं बीजं वीरुद् वा। तम् आलभ्योपयुज्य प्रजाः पशून् प्राप्नोतीति गौणाः शब्दाः।

[शावरभाष्ये १।२।१०]

(ङ) "अक्षान् यद् बभ्रून् आलभे" (अथर्व० ७।११४।७) इत्यत्र सायणभाष्ये 'आलभ्' इत्यस्यार्थः 'स्पर्शः' इति लिखितोऽस्ति।

कियद् गणयामि? अस्य शब्दस्यैतदर्थकप्रयोगाणां शतादप्यधिका दृष्टान्ताः साहित्ये उपलभ्यमानाः सन्ति। रन्तिदेवद्वारा ममालम्भनमनया दृशा दानार्थं सत्कारार्थं वा स्पर्शरूपमेवास्ति।

अपरञ्च किञ्चित् कथयितुमिच्छामि। वेदे मदर्थं 'अघ्न्या'शब्दस्य प्रयोगः कृतोऽस्ति, यो ममाहन्तव्यरूपमेव प्रकटयति। अत एवाहं 'अही' इति नाम्नाप्य-भिधीये—(न हन्यते या सा अही)। समस्तदेवतासमत्वेन पूजनीयत्वात् 'मही' इति ममैवान्यतममभिधानमस्ति (मह्यते पूज्यते सर्वदेवतात्मकत्वाद् उपभोगसाधन-त्वाद् वेति मही। देवराजकृतनिघण्टुव्याख्यायां पृ० २४५)। वैदिका आर्या मामभ्यर्थनाया भाजनम्, न तु हिंसनस्य भाजनममन्यन्त। उत्तररामचरितस्य 'वत्सतरी मडमडायिता' इति वाक्येनापि जनानां हृदयेषु संदेहप्रपञ्च उत्थापितः।

वत्सतर्यास्तत्र हननं नाभूत्। गोदुग्धेऽतिथिकार्ये उपयोजितत्वात् समाप्ते सति सा वत्सतरी क्षुधया मड् मड् इति शब्दं कृतवती स्यात्। भवभूतेः सारगर्भितस्य वाक्यस्यायमेवार्थः, अन्यथा कल्पनं नोचितमिति।

विश्वसिम्यहं यन्ममेयं रामकथा मन्मुखादेव श्रुत्वा भक्ता विश्वासं प्राप्ताः स्युर्यन्मम व्यापकता विश्वस्मिन् सर्वथैव प्राचीनकालादेव प्रतिष्ठिता वर्तते। भारतस्य पवित्रभूमौ वेदानुयायिभिर्मम सम्मानः सत्कारश्च सर्वदा कृतः। प्राचीनभारते मम वधः कदापि नाभूत्। अधुना यादृशी मम दुरवस्था विद्यते, तादृशी प्राचीनयुगे नासीत्। भवद्भिर्मां प्रति सा वैदिकी पूज्यभावना पुनरप्युद्बोधनीया। तथास्तु। स्वकथासमापनात् पूर्वमियदपरमपि कथयितुमिच्छामि यत् तेषामालङ्कारिकाणां बुद्धिं प्रति सदया भवामि, यैः खट्वारूढपङ्कनदीयजनानामुपमानत्वेन अहमेवाविष्कृता। एवं 'गौर्वाहीकः' इत्युदाहरणेन जाड्यमान्द्यादिदुर्बुद्धिसूचकदोषाणामाकरत्वं मय्येवाहितम्। तथ्यं त्वतः क्रोशं दूरे वर्तते। मम नाम्न एकोऽर्थो वाग्देवी सरस्वत्यप्यस्ति, यस्याः स्वामित्वात् तुलसीदासः 'गोस्वामी' इति प्रौढां पदवीमलङ्कृतवान्। फलतो बुद्धेरधिष्ठात्रीत्वाद् ममेयं शोधपूर्णा ज्ञानवर्धिनी रामकथा कस्मैचिदपि विदुषे आलोचकाय आश्चर्यविषयो न भवेदिति॥



# त्रिपुरादर्शनस्यापरिचिता आचार्याः कृतयश्च

श्रीव्रजवल्लभद्विवेदः, अनुसन्धानसंस्थानम्, वा०सं०वि०वि०वाराणसी।

### कौलमार्गप्रवर्तकस्य मत्स्येन्द्रनाथस्य स्थितिकालः

द्वैतवादिशैवसिद्धान्तमतावलम्बिना ख्रीष्टद्वादशशताब्दीभवेन श्रीमताऽघोर-शिवाचार्येण मृगेन्द्रवृत्तिदीपिकायां विद्यापादे "हिरण्यगर्भ-कपिल-मत्स्येन्द्रादयो वेद-सांख्य-कौलादितन्त्राणाम्" (पृ० ७४) इत्याचार्योक्त्या मत्स्येन्द्रनाथः कौलमार्ग-प्रवर्तकः प्रथम आचार्य इति प्रतिपादितम्। ख्रीष्टदशमशताब्दीभवोऽभिनवगुप्ता-चार्योऽपि तन्त्रालोकप्रथमाह्निकसप्तमपद्ये सकलकुलशास्त्रावतारकतया प्रसिद्धं मच्छन्दविभुं स्तौति। सोऽयं मत्स्येन्द्रनाथः स्वजनुषा भारतभुवं कस्मिन् काले समलञ्चकारेति न साम्प्रतं निश्चप्रचं वक्तुं पारयामः। [1]डा०प्रबोधचन्द्रबागचीमहोदय-स्तदनुयायिनश्च बहवस्तं ख्रीष्टनवमदशमशताब्दीभवं मन्यन्ते। [2]डा०कान्तिचन्द्र-पाण्डेयमहोदयस्तु तं ख्रीष्टपञ्चमशताब्दीभवं साधयति। कामरूपक्षेत्रं तस्य लीलाभूमि-रित्यत्र नूनं न केषामपि वैमत्यम्। आर्यमञ्जुश्रीमूलकल्प उपलब्धबौद्धतन्त्रग्रन्थेषु प्राचीनतम इत्यङ्गीक्रियते। तत्र[3] शैवानि वैष्णवानि च तन्त्राण्युल्लिखितानि। शाक्तानि तन्त्राणि, कुलशब्दादयः, कौलिकी प्रक्रिया चात्र न दृश्यन्ते। तथागतगुह्यकतन्त्रं (गुह्यसमाजतन्त्रं) पञ्चम्यां षष्ठ्यां सप्तम्यां वा ई० शताब्द्यां प्रादुर्भूतमित्यत्रैति-हासिकानां वैमत्यं वर्तते। अत्र कुलशब्दस्य कौलिकप्रक्रियायाश्च बाहुल्येन चर्चा दृश्यते। पूर्वोक्तप्रमाणेन कौलसम्प्रदायस्य प्रवर्तयिता मत्स्येन्द्रः स्वीक्रियते चेत्, तथा-

---

१. डॉ०बागचीसम्पादितस्य कलकत्ता-संस्कृत-ग्रन्थमालायां प्रकाशितस्य कौलज्ञाननिर्णयस्य भूमिका द्रष्टव्या, पृ० २५ २८।

२. द्रष्टव्यम्—डा०पाण्डेयविरचितायाः 'अभिनवगुप्त' इत्याख्यायाः कृतेर्द्वितीयं संस्करणम्, पृ० ५४६।

३. त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशितस्यास्य ग्रन्थस्य प्रथमे भागे ३४ तमे पृष्ठे द्रष्टव्यम्।

गतगुह्यकप्रादुर्भावतः पूर्वमेव तस्य समयोऽङ्गीकर्तव्यः। एवं च डा०कान्तिचन्द्रपाण्डेय-महोदयैः साधितस्तस्य समयो नैवातिविगुणतां भजेत।

## कौलमार्गप्रचारः

मत्स्येन्द्रनाथेन स्वोपज्ञातं ज्ञानं षट्सु राजपुत्रेषु वितीर्णम्[1]। तच्च ज्ञानं ततः षट्सु ओवल्लीषु प्रववृत इति—

आनन्दावलिबोधिप्रभुपादान्ताश्च योगिशब्दान्ताः।
एता ओवल्लयः स्युः···   ···   ···   ··· ॥
(२९।३६)

अस्मात्तन्त्रालोकवचनाज्ज्ञायते। 'ओवल्ली' इति ज्ञानप्रवाह इत्यर्थे प्रयुज्यते। मत्स्येन्द्रनाथेन षट्सु राजपुत्रेषु यज्ज्ञानं वितीर्णं तदेतासु षट्सु ओवल्लीषु प्रवहदासीत्। आनन्दादियोगिशब्दान्तान् पदान् स्वनाम्नोऽन्ते धारयद्भिः षड्राजपुत्राणां शिष्यप्रशिष्यैः स प्रवाहः प्रवर्धित इति तदर्थः प्रतीयते। एतेषु [2]नागबोध्यादयः सिद्धा बौद्धतन्त्रस्य तथागतगुह्यकस्य व्याख्यातारः सन्ति। बौद्धानां कौलानां च तन्त्रेषु देवताभेदमपहायान्येषु क्रियाकलापेषु प्रायः सामञ्जस्यं दृश्यते। अनेनास्य ज्ञानस्योपज्ञास्थलमेकमेवेति कल्पयितुं शक्यते। किमेतज्ज्ञानं मत्स्येन्द्रनाथेन तदुत्तराधिकारिभिश्च सदूतीकैः षड्राजपुत्रैर्बौद्धेषु शैवेषु शाक्तेषु च शिष्यप्रशिष्येषु प्रवर्तितम्? प्रश्नोऽयं स्वं समाधानमपेक्षते विद्वद्भ्यः।

## शैवशाक्तागमप्रादुर्भावः

श्रीमताऽभिनवगुप्तेन तन्त्रालोके गुरुनिरूपितः शैवागमस्यायातिक्रम इत्थमुपदिष्टः—

तेषां क्रमेण तन्मध्ये भ्रष्टं कालान्तराद्यदा।
तदा श्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन्॥

---

१. उद्दीच्यां श्रीमच्छन्दकुक्कुणाम्बादिसाधिकारराजपुत्रषट्कं सदूतीकमिति' 'कुलाम्नाय-दर्शनशब्दार्थः'' (१२।१) इति नेत्रतन्त्रोद्द्योते वदन् क्षेमराजोऽप्येनमेवार्थं साधयति।

२. द्रष्टव्या—तथागतगुह्यकस्य गायकवाड-संस्कृत-ग्रन्थमालायां प्रकाशितस्य भूमिका, पृ० ३१

त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये।
द्वयाद्वये च निपुणाः क्रमेण शिवशासने॥
आद्यस्य चान्वयो जज्ञे द्वितीयो दुहितृक्रमात्।
स चार्धत्र्यम्बकाभिख्यः सन्तानः सुप्रतिष्ठितः॥
अतश्चार्धचतस्रोऽत्र मठिकाः सन्ततिक्रमात्।
शिष्यप्रशिष्यैर्विस्तीर्णाः शतशाखं व्यवस्थितैः॥
[३६।११-१४]

"अर्धचतस्र इत्यर्धेन चतस्रः सार्धास्तिस्र इत्यर्थः" इति तत्र व्याख्याति जयरथः। दुहितुरर्धत्र्यम्बकाभिख्यार्धैव मठिका कल्पितेति भावः। अत्र त्र्यम्बकेन श्रीनाथेन च स्वस्वमठिका कुत्र स्थापितेति न ज्ञायते। "निःशेषशास्त्रसदनं किल मध्यदेशः" [1]इत्यभिनवगुप्तोक्तिप्रामाण्येन मध्यदेशे तयोः स्थितिः कल्पनीया। अमर्दकतीर्थं साम्प्रतिके मध्यप्रदेशे ग्वालियरनगरसमीपे वर्तते। तत्रैवामर्दकाचार्येण स्वमठिका स्थापिता भवेत्। कवचशिव-सदाशिव-हृदयशिव-[2]व्योमशिवादीनामनेकेषां शैवद्वैताचार्याणां जनिना पूतमेतत्तीर्थम्। अत्रत्यः [3]कुमारशिवाचार्यो गुर्जरदेशाधिपतेर्मूलराजस्य गुरुरासीत्। ततः प्रभृति शैवदर्शनं तत्र प्रववृते। अत्रत्यैरेव शैवाचार्यैर्मालवदेशेऽपि शैवदर्शनप्रचारः कृतः। स्वयं भोजराजोऽपि तत्त्वप्रकाशनामानं द्वैतशैवदर्शनग्रन्थं जग्रन्थ। अत्रत्या आचार्याः कश्मीरदेशाधिपतिभिराहूतास्तत्र द्वैत-द्वैताद्वैत-अद्वैतशैव-सिद्धान्तान् प्रचारयामासुः। द्वैतशैवागमव्याख्यातारो नारायणकण्ठ-रामकण्ठप्रभृतयः काश्मीरा एव। एतेषां पूर्वजा मध्यदेशत एव तत्र गताः स्युः। अधुना तु दशाष्टादश-भेदभिन्ना द्वैत-द्वैताद्वैतशैवागमा उपाङ्गव्याख्योपव्याख्यानप्रकरणग्रन्थसहिताः केवलं दक्षिणभारते कर्णाटकप्रदेशे गुरुशिष्यपरम्परया सुरक्षिताः सन्ति।

अद्वैतशैवदर्शनप्रवर्तयिता त्र्यम्बकः (त्र्यम्बकादित्यः) त्र्यम्बकाख्यगुहायामुषित्वा चतुर्दश मानसान् पुत्रान् ससर्ज। सर्वे एवैते विरक्ता न सांसारिकाणि

---

१. तन्त्रालोके, ३७।३८।

२. एष व्योमशिव एव प्रशस्तपादभाष्यस्य व्याख्याता स्यात्।

३. त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशितायाः ईशानशिवगुरुदेवपद्धतेर्द्वितीयभागभूमिका द्रष्टव्या।

कृत्यानि सम्पादयामासुः। पञ्चदशः पुत्रस्तु गृहस्थाश्रममङ्गीचकार कश्मीरांश्च जगाम। सोऽयमासीत् सङ्गमादित्यनामा। सङ्गमादित्यस्य पुत्रो वर्षादित्यः, तत्पुत्रोऽरुणादित्यः, तत्पुत्रश्च आनन्दसंज्ञको बभूव। अस्यैव पुत्रः सोमानन्द इति सोमानन्दकृतशिवदृष्टि-समाप्तिस्थैः पद्यैर्ज्ञायते।

अभिनवगुप्ताचार्यस्य पूर्वजोऽत्रिगुप्तो [1]मध्यदेशात एव कश्मीरान् जगाम। अभिनवगुप्त [2]आनन्द( अमर्दक )सन्ततिजादेरकवरात्मजवामनाथाद् द्वैतशैव-दर्शनम्, श्रीनाथसन्ततिजाद् भूतिराजतनयाद् द्वैताद्वैतशैवदर्शनम्, त्र्यम्बकसन्तति-प्रसराल्लक्ष्मणगुप्तादद्वैतशैवदर्शनम्, अर्धत्र्यम्बकसन्ततिभवाच्छम्भुनाथात् कौलदर्शनं चाधीत्य स्वकीयं तन्त्रालोकं रचयामास। कौलदर्शनं मत्स्येन्द्रनाथेन कामरूपे प्रवर्ति-तम्। अर्धत्र्यम्बकमठिका त्र्यम्बकादित्यदुहित्रा कामरूपपीठ एव स्थापिता स्यात्। तस्यामेव परम्परायां शम्भुनाथः संबभूव, यो हि अभिनवगुप्तं कौलदर्शनं [3]क्रमदर्शनं

---

१. तन्त्रालोके, ३७।३८।

२. तन्त्रालोके, ३७।६०–६१।

३. वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥ इति,
वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित्।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः॥

इति चाभिनवगुप्तरचितायां परात्रीशिकाविवृतौ (पृ० ९२) दृश्यते। अत्र कुल-कौल-मत-त्रिकदर्शनान्युल्लिखितानि, किन्तु क्रमदर्शनं न दृश्यते। क्रमस्तोत्रे क्रमकेलिनाम्नी टीका अभिनवगुप्तपादेन रचिता। क्रमसद्भाव-पञ्चशतिकाप्रभृतयो ग्रन्थाः शिवानन्द-निष्क्रियानन्दनाथादय आचार्याश्च तन्त्रालोके तट्टीकायां च जयरथरचितायां दृश्यन्ते। चिद्गगनचन्द्रिका-महार्थमञ्जरी-महानयप्रकाशप्रभृतयो ग्रन्थाः क्रमदर्शनस्यैव। कुलत्रिकादि-शैवदर्शनेभ्यः शाक्तस्य क्रमदर्शनस्य वैशिष्ट्यं च स्पष्टमेवावलोक्यते यत् तत्र काली अम्बिका वा परं तत्त्वम्, न तु कौल-त्रिकदर्शनवच्छिवस्य शक्तिः। अत्रत्या आकरग्रन्था देव्या देवायोपदिष्टाः, न तु कौल-त्रिकदर्शनवद् देवेन देव्यै। भट्टप्रद्युम्नरचितस्य तत्त्वगर्भस्तोत्रस्यात्रैवोद्धृते श्लोकेऽम्बिकैव प्रथमं स्तुता। एतच्च मतं सोमानन्देन खण्डितम्। एतदपि स्तोत्रं क्रमदर्शनस्यैव भवेत्।

चाशिक्षयत्। कालीमम्बिकां वा परतत्त्वं साधयत् क्रमदर्शनं स्पष्टमेव शाक्तं दर्शनम्। दशमहाविद्योपासनाप्रवर्तकं कौलदर्शनमपि शाक्तदर्शनान्तर्गतमेवाङ्गीक्रियते। एवं च शाक्तागमस्थलं कामरूपपीठमेवाङ्गीकर्तव्यम्। शाक्तागमे कामरूप-पूर्णगिरि-जालन्धर-उड्डियानाख्यानि चत्वारि पीठानि सुप्रसिद्धानि। भगवत्यास्त्रिपुरसुन्दर्या उपासना कदा कस्मिन् वा प्रदेशे प्रारब्धा ? प्रश्नस्यास्य समाधानायाधुना प्रमाणान्यन्वेषणीयानि। तदत्र किञ्चित् प्रयत्यते।

### त्रिपुरोपास्तिः कदा कस्मिन् वा प्रदेशे प्रवृत्ता ?

महार्थमञ्जरीकारस्य महेश्वरानन्दस्य परमगुरुः शिवानन्दो नित्याषोडशिकार्णवस्य टीकायामृजुविमर्शिन्याम्—"सम्प्रदायस्य कश्मीरोद्भूतत्वात्" इत्येवं त्रैपुरदर्शनोद्भवस्थलं कश्मीरमङ्गीकरोति। दाक्षिणात्यानां त्रैपुरसम्प्रदायानुयायिनामेषामाचार्याणां रचनासु कश्मीरदर्शनप्रभावः स्पष्टमवलोक्यते। कश्मीरोद्भवस्तन्त्रालोकव्याख्याता जयरथो [1]वामकेश्वरीमतव्याख्यायामाह—"वस्तुतो ह्यस्य दर्शनस्यैतदेवाचार्यद्वयं[2] कश्मीरेष्ववतारकम्" (पृ० ४८) इति, "कश्मीरेषु श्रीमान् [3]विश्वावर्त एवास्य दर्शनस्य

कौलदर्शनं त्रिकदर्शनं च प्रसिद्धमेव। अनयोर्मध्यमस्थानीयस्य मतदर्शनस्य विषये तद्वैशिष्ट्यविषये च नाधिकं किमपि ज्ञायते। सिद्धामत( सिद्धयोगीश्वरीमत )श्रीमतप्रभृतयो ग्रन्थाः काश्मीरागमग्रन्थेषूद्धृता दृश्यन्ते। वामकेश्वरतन्त्रे चतुःषष्टितन्त्रनामप्रस्तावे कुब्जिकामत-महापिचुमत-महालक्ष्मीमत-कुरूपिकामत-रूपिकामत-सर्ववीरमत-विमलामत-प्रभृतीनि नामानि दृश्यन्ते। किमेतानि मततन्त्राणि ? शिवानन्देन शम्भ्वैक्यनिर्णयदीपिका-मङ्गलाचरणश्लोकेषु ग्रन्थ एष मतसम्प्रदायस्येत्युक्तम्। कौल-क्रम-त्रिकदर्शनेभ्यो मतदर्शनस्य किं नाम वैशिष्ट्यमित्यधुना परीक्षणीयं वर्तते।

१. वामकेश्वरतन्त्रं नित्याषोडशिकार्णवश्चास्यैव ग्रन्थस्य नामान्तरमिति मदीये योगिनीहृदय-द्वितीयसंस्करणस्यानुप्रास्ताविके द्रष्टव्यम्।

२. ईश्वरशिवो विश्वावर्तश्चात्रत्यमाचार्यद्वयम्। वामकेश्वरीमतविवरणसंपादकेन तु शङ्करराशिरत्र प्रथम आचार्यो गृहीतः। तत्तु पूर्वापरग्रन्थानवलोकनानवधानप्रयुक्तम्।

३. सोऽयं विश्वावर्तः—"श्रीविश्वावर्तस्तु त्रिंशत्या स्तोत्रैः स्वात्मोत्प्रेक्षितनामभिर्व्यवस्थापितवान्" (पृ० १) इति भट्टोत्पलाचार्यरचितशिवस्तोत्रावलीव्याख्यातृक्षेमराजप्रदर्शितात् शिवस्तोत्रावल्या आधुनिकक्रमस्य व्यवस्थापकाद्भिन्न एवेति वामकेश्वरीमतविवरण-सम्पादकाः।

साक्षात् प्रवर्तयिता" (पृ० १२५) इति च। अनेनोद्धरणद्वयेन परिज्ञायते—नहि कश्मीरे त्रिपुरादर्शनमिदम्प्रथमतया प्रादुर्भूतम्, अपि त्वाचार्यद्वयेन प्रदेशान्तरादानीय तत्रैतन्मतं प्रतिष्ठापितमिति। द्वयोरेतयोराचार्ययोर्जयरथ ईश्वरशिवाचार्यमतस्य बलवत्त्वमङ्गीकरोति, स रसमहोदधिश्लोकानां साक्षात् प्रवर्तयिता शूरमठाधिपतिश्चासीदिति च सूचयति[1]। नवमशताब्दीभवस्य (८५५-८८३ ई०) राज्ञोऽवन्तिवर्मणो मन्त्री शूरोऽस्य मठस्य संस्थापकः श्रूयते। शिवसूत्रकर्तुर्वसुगुप्तस्य शिष्यः कल्लटो[2] राज्ञोऽवन्तिवर्मणः समसामयिक आसीदिति राजतरङ्गिणीप्रामाण्येनैतिहासिकाः कथयन्ति। स्पन्दकारिका वसुगुप्तकृतिरथवा कल्लटकृतिरित्यत्र मतद्वयं वर्तते। वसुगुप्तेनैव रचिता स्पन्दकारिकेति क्षेमराजादयोऽभिनवगुप्तशिष्या आहुः। कल्लटकृतिरिति तु शिवसूत्रवार्त्तिककारभास्कर-स्पन्दप्रदीपिकाकारोत्पलवैष्णवप्रभृतय ऊचिरे। अप्रासङ्गिकतयाऽत्र विस्तरेण वक्तुं न शक्यते। तथापि [3]स्पन्दकारिका कल्लटकृतिरिति पक्षो गरीयान् प्रतिभाति। स्पन्दशब्दो विमर्शवाची। विमर्शशब्दश्च शक्तिवाचकत्वेन शैवेषु शाक्तेषु च तन्त्रेषु प्रसिद्धः। एवं च स्पन्दकारिकायां शाक्तं दर्शनं व्याख्यातम्। कल्लटशिष्येण भट्टप्रद्युम्नेन तत्त्वगर्भस्तोत्रे—

यस्या निरुपधिज्योत्स्नारूपायाः शिवसंज्ञया।
व्यपदेशः परां तां त्वामम्बां नित्यमुपास्महे[4]॥

१. वामकेश्वरीमतविवरणम्, पृ० ४८।

२. भट्टकल्लटवत् शिवदृष्टिकारः सोमानन्दोऽपि वसुगुप्तपादस्य शिष्यः समसामयिकश्चेति मतं प्रायः सर्वैः स्वीक्रियते। तन्न साधु प्रतिभाति। "किञ्चिदुच्छूनता सैव महद्भिः कैश्चिदुच्यते" (१।१६) इति शिवदृष्टौ सोमानन्द आह। "भट्टप्रद्युम्नेन तत्त्वगर्भे" इति च तत्र भट्टोत्पलो वृत्तिं चकार। भट्टप्रद्युम्नो भट्टकल्लटस्य शिष्य इति भट्टभास्करेण स्वकीये शिवसूत्रवार्त्तिके प्रारम्भ एव प्रदर्शितम्। तत्रैव वसुगुप्ततो भट्टभास्करपर्यन्तं स्पन्ददर्शनपरम्परापि प्रदर्शिता। अस्यां परम्परायां सोमानन्दो न दृश्यते। शिवदृष्टिसमाप्तौ सोमानन्देन प्रत्यभिज्ञादर्शनपरम्पराऽदर्शि। तत्र स्पन्ददर्शनीया आचार्या न दृश्यन्ते। एवं च स्पन्ददर्शनं प्रत्यभिज्ञादर्शनतः पृथगेव। कल्लटशिष्यं प्रद्युम्नं सोमानन्दो महच्छब्देन विशेषयन् तन्मतं च शिवदृष्टितृतीयाह्निके खण्डयन् भट्टप्रद्युम्नपराभव एव भवितुमर्हति। एवं च सोमानन्दः कल्लटसमसामयिकस्तच्छिष्यश्चेति मतं संदिग्धमेव।

३. प्रश्नोऽयं निबन्धान्तरे समाधास्यते विस्तरेण।

४. एष श्लोको रामकण्ठेन स्वकीयायां स्पन्दकारिकाविवृतौ (पृ० १२६) तत्त्वगर्भश्लोकत्वेनोद्धृतः। तत्त्वगर्भस्तोत्रं च भट्टप्रद्युम्नकृतिरिति शिवदृष्टिवृत्ति उत्पलाचार्यकृतितो (पृ० १६) ज्ञायते।

इत्येवं स्पष्टमेव शाक्तं दर्शनं प्रत्यपादि। अत एव कश्मीरशैवदर्शनप्रतिष्ठापकेन सोमानन्देन शिवदृष्टौ तृतीयाह्निकप्रारम्भे एतन्मतं खण्डितम्[1]। परात्रीशिकानामकः कौलदर्शनग्रन्थोऽपि तेन त्रिकदर्शनमनुरुद्ध्य व्याख्यातः। तन्त्रालोके ऊनत्रिंशत्तमाह्निके कौलमतविवरणप्रसङ्गे—"स्वशरीराधिकसद्भावभावितामिति ततः प्राह। श्रीमत्कल्लट-नाथः" (२९।१२३-१२४) इत्येतत्कल्लटवचनमुद्धृतम्। तत्त्वचिन्तामण्या मधु-वाहिन्या वा तत्कृतेरेतद्वचनमथवा तेनाभ्यां पृथक् कौलदर्शनग्रन्थो निर्मित इत्यधुना वक्तुं न शक्येत, तत्कृतयोरनयोर्ग्रन्थयोः साम्प्रतमनुपलब्धेः[2]। कल्लटः स्पष्टमेव शक्तेः प्राधान्यं मनुत इति तद्ग्रन्थैः परिज्ञातमासीत्। स एव यदि स्पन्दकारिकायाः कर्ता स्वीक्रियेत तर्हि स्पन्दकारिकया शैवं दर्शनं न साधयितुं शक्येत, अतः सोमानन्दा-नुयायिभिर्वसुगुप्त एव स्पन्दकारिकायाः कर्तेति स्वीकृतम्। भट्टलोल्लटादिभिः कल्लटकृतस्पन्दवृत्त्यनुसारीण्येव स्पन्दसूत्राणि व्याख्यातानि, क्षेमराजेन तु न तथा कृतमिति स एवाह[3]। सर्वैर्विवृतिकृद्भिर्यद् व्याख्यायि ततोऽपूर्वमेवानेन व्याकृतमिति[4], अनन्तापरटीकाकृन्मध्ये स्थितिममृष्यताऽस्माकं गुरुणा स्पन्दशास्त्रं न विवृतमिति[5] च स वदति। अलमप्रासङ्गिकेन। एतेनैतन्निष्कृष्यते—राज्ञोऽवन्तिवर्मणो राज्यकाले (८५५-८८३ ई०) कश्मीरेषु कौलक्रमदर्शने प्रचलिते आस्ताम्। त्रैपुरं दर्शनमपि तदैव तत्र प्रवेशमलभतेति।

नवत्रिकोणात्मके श्रीचक्रे केन्द्रस्थाने बिन्दुर्दृष्टो भवेत् श्रीमद्भिः। एष बिन्दु-रोड्याणपीठस्य तत्र स्थितायास्त्रिपुरसुन्दर्याश्चर्यानन्दनाथस्य च प्रतीकभूतोऽङ्गीकृतः

---

१. अत्रत्या भट्टोत्पलाचार्यकृता विवृतिर्द्रष्टव्या।

२. मधुवाहिनी भट्टकल्लटकृतिरिति केवलं डा०जगदीशचन्द्रचटर्जीलेखेन (कश्मीर शैविज्म, पृ० ३७) ज्ञायत इति डा०कान्तिचन्द्रपाण्डेयः प्रतिपादयति। (अभिनवगुप्त, द्वितीयं संस्करणम्, पृ० १५७) तन्न साधु, "शिवसूत्रवृत्त्योर्मधुवाहिनीतत्त्वार्थचिन्ता-मण्योर्भट्टश्रीकल्लटपादैः" (ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, भा० २, पृ० ३०) इत्य-भिनवगुप्तवचनमपि तत्र प्रमाणम्। एतच्च वचनं चटर्जीमहोदयेन तत्रैव स्थलान्तरे (पृ० ३१) उद्धृतमपि।

३. क्षेमराजकृते स्पन्दनिर्णये, पृ० ३४ द्रष्टव्यम्।

४. तत्रैव, पृ० १३।

५. तत्रैव, पृ० ७७।

शिवानन्दादिभिः । "अलं चर्यानन्दनाथोपदेशविशदप्रतिभाविभवैः सह संभाषितेन" (पृ० ३४) इति वामकेश्वरीमतविवरणे जयरथो वामकेश्वरीमतस्यार्थं विकुर्वाणान् विपक्षिणः कटाक्षयति । एतेन त्रैपुरदर्शनस्य प्रथमः प्रवर्तकश्चर्यानन्दनाथ इति बाढं सिध्यति । उड्डियानस्थानं चोत्तरस्यां दिशि कश्मीरसमीप एव वर्तते । साम्प्रतं 'स्वात' इति नाम्ना ख्याता 'सुवास्तु'नदी पश्चिमगन्धारदेशे प्रवहति । सुवास्तुनदीद्रोणी प्राक्तनसमये 'औद्यानी' इति कथ्यते स्म । तस्या एव 'उड्डियान' इत्यपि नाम[1] । अस्मिन्नुड्डियानाख्ये देशे एवेदम्प्रथमतया चर्यानन्दनाथेन त्रैपुरसम्प्रदायः प्रतिष्ठापितः स्यात् । अत्रैव दीक्षितेनेश्वरशिवेन तज्ज्ञानं कश्मीरेष्ववतारितं स्यात् । एष च देशः कश्मीरसमीप एव स्थित इति कृत्वा शिवानन्देन "सम्प्रदायस्य कश्मीरोद्भूतत्वात्" इति चोक्तं स्यात् ।

## आचार्यास्तत्कृतयश्च

अगस्त्यकृतित्वेन प्रसिद्धानि शक्तिसूत्राणि, परशुरामकृतित्वेन प्रसिद्धानि कल्पसूत्राणि, गौडपादकृतित्वेन प्रसिद्धानि श्रीविद्यारत्नसूत्राणि सुभगोदयस्तुतिश्च, शङ्कराचार्यकृतित्वेन प्रसिद्धानि सौन्दर्यलहरी सुभगोदयः सौभाग्यविद्या त्रिशतीभाष्यं च, ब्रह्माण्डपुराणीयं ललितोपाख्यानम्, त्रिपुरारहस्यमाहात्म्यज्ञानखण्डे, अन्यानि च ज्ञानार्णव-कादिमत-दक्षिणामूर्तिसंहिता-परमानन्दतन्त्रप्रभृतीनि त्रिपुरातन्त्राणि शिवानन्दकृतिषु ऋजुविमर्शिन्यादिषु, महेश्वरानन्दकृतौ महार्थमञ्जरीपरिमले, अमृतानन्दकृतौ योगिनीहृदयदीपिकायाम्, जयरथकृते वामकेश्वरीमतविवरणे, विद्यानन्दकृतायामर्थरत्नावल्यां च नोद्धृतानि । प्राचीनेषु ग्रन्थेष्वेषामुद्धरणान्यन्वेषणीयानि ।

ईश्वरशिवो विश्वावर्तश्चेत्याचार्यद्वयं त्रैपुरसम्प्रदायस्य कश्मीरेष्ववतारकमिति पूर्वमुक्तम् । तत्रेश्वरशिवो रसमहोदधिश्लोकानां साक्षात् प्रवर्तयिता । रसमहोदधिश्च वामकेश्वरीमतव्याख्यानपरः कारिकामयो ग्रन्थः प्रतीयते । अस्य विस्तृतान्युद्धरणानि जयरथविवरणे द्रष्टव्यानि । जयरथविवरणे[2]वार्त्तिककारस्यानेकानि वचनानि दृश्यन्ते ।

---

१. द्रष्टव्यः—डा० वासुदेवशरण-अग्रवालमहोदयानाम्—"अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम्" इति शीर्षको निबन्धः, सारस्वत्याः सुषमायाः ६ व० ३-४ अङ्कयोः प्रकाशितः, पृ० ३४२ ।

२. द्रष्टव्यम्—पृ० ९, १२, ३० ।

एष वार्त्तिककारो विश्वावर्तोऽन्यो वेति प्रमाणाभावान्न वक्तुं शक्यते। "एतान् सद्गुरुलब्धान् विश्वावर्तः प्रवर्तितवान्" ( पृ० ३६ ) इति, "ततश्च विश्वावर्तमुखेनैव लक्ष्यते यत् तदेवेदमस्मत्पर्यन्तं शिष्यप्रशिष्यक्रमेण सर्वेषामपि प्राप्तम्" ( पृ० ४८ ) इति च वदन् जयरथस्तस्य महत्त्वं ख्यापयति। शङ्करराशिर्वामकेश्वरीमतस्य व्याख्यातेति जयरथधृततद्विवरणवचनाभ्यां ( पृ० ४८, ५४ ) प्रतीयते। एवमेव 'अल्लटोऽपि वामकेश्वरीमतव्याख्याता। अस्य व्याख्यानं जयरथेन पदे पदे साक्रोशं खण्डितम्। जयरथविवरणत एव सूत्रकारो नरवाहनदत्तः ( पृ० २ ), वामकेश्वरीमतव्याख्याता कल्याणवर्मा ( पृ० १३७ ), वृत्तिकारो दीपकनाथः ( पृ० ११५ ), मन्त्रसंकेतकर्ता वुप्पाराहुलः ( पृ० १२५ ) इत्येते ग्रन्था ग्रन्थकाराश्च त्रैपुरमतावलम्बिनो ज्ञायन्ते। 'अभिनवगुप्त' [2]इत्याख्ये ग्रन्थे डा०कान्तिचन्द्रपाण्डेयमहोदयेन जयरथसमयः ख्रीष्टद्वादशशताब्द्या अन्तिमो भागस्त्रयोदशशताब्द्या आद्यो भागश्चेति निर्धारितः। वामकेश्वरीमतविवरणभूमिकायां तु ख्रीष्टद्वादशशताब्द्या आद्यो भाग इति। ततः पूर्वतना एवैते सर्वे ग्रन्था ग्रन्थकाराश्च।

## हादिकादिविभागः

त्रिपुरासम्प्रदाये हादिविद्यायाः कादिविद्यायाश्च विभागः कदा समजायतेति न ज्ञायते। शिवानन्दविद्यानन्दाभ्यां हादिविद्या निष्कीलसम्प्रदायीया, कादिविद्या च सकीलसम्प्रदायीयेत्युक्तम्। शिवानन्दो हादिविद्यामनुसरति। पुण्यानन्दामृतानन्दावपि हादिविद्यामनुसरतः। विद्यानन्दनाथोऽर्थरत्नावल्यां यद्यप्युभावपि सम्प्रदायावनुसरति, तथापि प्रथमं कादिविद्यानुसारिणीं व्याख्यामुक्त्वा ततो निष्कीलसम्प्रदायानुसारिणीं व्याख्यां विदधाति। अत्र प्रतिपाद्यमानार्थजातस्य, अनयोर्हादिकादिविभागयोरुपलब्धानां ग्रन्थानां चावलोकनेन ज्ञायते यत् कादिविद्यासम्प्रदायः कर्मकाण्डबहुलो बाह्ययागप्रधानः, हादिविद्यासम्प्रदायश्च दर्शनबहुलोऽन्तर्यागप्रधान इति। हादिविद्यासम्प्रदायीया सिद्धौघ-मानवौघपरम्परा इतिहासानुमोदिता, कादिविद्यायाः परम्परा तु कल्पितेव दृश्यते। हादिविद्यानुसारिणी सिद्धौघ-मानवौघपरम्पराऽनुपदमेव प्रदर्शयिष्यते। नैतादृशी सर्वसंमता नामावली कादिविद्याचार्याणामुपलभामहे।

---

१. द्रष्टव्यम्—वामकेश्वरीमतविवरणम्, पृ० ५४।

२. द्रष्टव्यम्—द्वितीयं संस्करणम्, पृ० २६२।

सौन्दर्यलहरीस्तोत्रेऽन्येषु च ग्रन्थेषु सर्वत्र पूर्वं हादिविद्यैवोद्धृता। अतो हादिविद्यासम्प्रदाय एव प्राचीन इति प्रतीयते। पश्चात् कादिविद्यासम्प्रदायः कदा प्रवृत्त इत्यन्वेषणस्याधुना विषयः।

## हादिमतीया दिव्यौघ-सिद्धौघ-मानवौघपरम्परा

ऋजुविमर्शिन्यामर्थरत्नावल्यां सौभाग्यसुधोदये च त्रिपुरासिद्धान्तीयहादिसम्प्रदायस्य दिव्यौघ-सिद्धौघ-मानवौघपरम्परा इत्थं दृश्यते—दिव्यौघः सप्तभिर्गुरुभिर्मुद्रितः, सिद्धौघश्चतुर्भिः, मानवौघोऽष्टभिर्गुरुभिः स्थापित इति शिवानन्दप्रदर्शित ऋजुविमर्शिनीक्रमः। अत्राष्टमो गुरुर्ऋजुविमर्शिनीकार एव। अर्थरत्नावल्यां सौभाग्यसुधोदये च दिव्यौघः पञ्चभिः, सिद्धौघश्च षड्भिर्गुरुभिः प्रदर्शितः। अर्थरत्नावल्यां मानवौघः सप्तभिर्गुरुभिर्मुद्रितः, सौभाग्यसुधोदये तु मानवौघो ग्रन्थकर्तृपर्यन्तं विस्तारितः। तत्र दिव्यौघे चर्यानाथ-ओड्डनाथ-षष्ठिनाथ-मित्रीशनाथा लोपामुद्रा अगस्त्यश्चेति षडेव नामानि ऋजुविमर्शिन्यां तदनुसारिण्यां [1]चिद्वल्ल्यां च दृश्यन्ते। अत्र दिव्यौघीया सप्त संख्या न पूर्यते। अर्थरत्नावल्यां सौभाग्यसुधोदये च क्रोधमुनिः पञ्चमो दिव्यौघगुरुः प्रदर्शितः। लोपामुद्रा अगस्त्यश्च सिद्धौघे परिगणितौ। कङ्कालतापसः, धर्माचार्यो लघुनुतिकर्ता, मुक्तिकेशिनी, दीपकाचार्यो दण्डककर्ता च सर्वत्र सिद्धौघे परिगणिताः। जिष्णुदेव-मातृगुप्तदेव-तेजोदेव-मनोजदेव-कल्याणदेव-रत्नदेव-वासुदेवाख्याः सप्त मानवौघीया गुरवः। एते सप्तैवार्थरत्नावलीकारेण प्रदर्शिताः। "तेन (वासुदेवमुनिना) पुत्रीकृत ऋजुविमर्शिनीकर्ता शिवानन्दमहायोगी" इत्यृजुविमर्शिनीकारः प्राह। सौभाग्यसुधोदये तु कल्याणदेवतः पश्चात् परमानन्दः, स्वात्मानन्दः, त्रिलोचनेशः, देवेशः, केशवेशः, पुण्यानन्दः, अमृतानन्द इति क्रमः प्रदर्शितः। अत्र रत्नदेव-वासुदेवाख्ये मानवौघगुरुत्वन्तिमे द्वे नामनी न दृश्येते। तयोः स्थाने परमानन्दः स्वात्मानन्द[2] इति च नामनी अत्र स्तः।

## हादिमतीया ग्रन्था ग्रन्थकाराश्च

हादिविद्याया आद्यस्य सिद्धाचार्यस्य कङ्कालतापसस्य कोऽपि ग्रन्थो नोपलभ्यते। कङ्कालः, कङ्कालतापनः, कालतापन इति च नामास्याचार्यस्य दृश्यते।

---

१. द्रष्टव्यम्—सटीकस्य कामकलाविलासस्य मद्रपुरीमुद्रितं तृतीयं संस्करणम्, पृ० ७१-७२।

२. शिवानन्देनाप्यृजुविमर्शिनीमङ्गलाचरणतृतीयपद्ये स्वात्मानन्दो गुरुरूपेण स्मृतः।

सिद्धौघपरम्परायां द्वितीयो धर्माचार्यः "लघुनुतिवररचनविदितविज्ञानः"[1] इत्यमृतानन्दकृतसौभाग्यसुधोदयप्रामाण्यतो लघुस्तवकर्तेति ज्ञायते। एष च लघुस्तवो निर्णयसागरयन्त्रालयतः प्रकाशितायाः काव्यमालायास्तृतीये गुच्छके प्रकाशितायां पञ्चस्तव्याम्, मैसूरनगरतः प्रकाशिते सौन्दर्यलहरीसंस्करणे स्थितायां पञ्चस्तव्यां च प्रथमः। पञ्चानामपि स्तवानामेकस्यामेव मातृकायां बाहुल्येनोपलब्धेरेक[2] एव सर्वेषामेषां कर्तेति लघुस्तवीसंपादकस्य कल्पना नैवानुचिता। सरस्वतीकण्ठाभरणे पञ्चमपरिच्छेदेऽत्रत्यतृतीयस्तवस्थः "लक्ष्मीवशीकरणचूर्णसहोदराणि" (१८ श्लो०) इत्यादिश्लोको भोजराजेनोद्धृतः, अथ च तृतीयस्तवस्थ एव "पादाम्बुजं भवतु मे विजयाय मञ्जु" इति प्रथमश्लोकस्योत्तरार्धः काव्यप्रकाशे दशमोल्लासे उदाहृतो दृश्यते। धर्माचार्यात् परभावी दीपकनाथो भोजराजदृष्टप्रभाव इत्यृजुविमर्शिन्यामुक्तम्। सरस्वतीकण्ठाभरणकार एष भोजराजः, प्राचीनः कश्चन भोजराजो वेति प्रमाणाभावान्न वक्तुं शक्यते; अथापि धर्माचार्यः काव्यप्रकाशकारतः सरस्वतीकण्ठाभरणकारतश्च प्राचीन इति सिद्ध्यति। अत्रत्यो लघुस्तवो राघवानन्दकृतया वृत्त्या सह त्रिवेन्द्रम्-संस्कृत-ग्रन्थमालायां प्रकाशितो वर्तते। अस्योपद्विसहस्रश्लोकपरिमाणा परमेश्वरकृता लघुबृंहणी व्याख्या महेश्वरानन्दनाथेन महार्थमञ्जरीपरिमले समुद्धृता। अस्यैका मातृका त्रिवेन्द्रम्-नगरे केरलविश्वविद्यालये सुरक्षिता विद्यते, अस्य स्तवस्यान्या अप्यनेकाष्टीकाः सन्ति, तास्वेका[3] जैनाचार्येणापि रचिता।

---

१. अत्र सौभाग्यसुधोदय-सुभगोदयवासना-ऋजुविमर्शिनी-अर्थरत्नावलीप्रभृतीनां ग्रन्थानां स्थलनिर्देशो मूलमातृकाप्रतिलिप्याश्रितो नैवोपयोगीति धिया सर्वत्र परित्यक्तः सः। ग्रन्थप्रकाशनानन्तरं परिशिष्टसाहाय्येन सर्वं सुलभं भविष्यति सुधियाम्।

२. सौन्दर्यलहरीटीकायां लक्ष्मीधरायाम्—"चर्चास्तोत्रे कालिदासकृते (पृ० १८७) इति, "भगवत्पादैरनेडमूकेभ्यो लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्नाऽवाचि" (पृ० २८) इति, "कालिदासभगवत्पादैः......सकलजननीस्तवे" (पृ० ३०५, १९५७ ई० वर्षे प्रकाशितं मद्रपुरीयं संस्करणं द्रष्टव्यम्) इति च दृश्यते। कामाक्षीतनयकृतायामम्बास्तवटीकायां प्रारम्भे—"कालिदासो महाकविः......त्रिंशच्छ्लोकैरभिष्टौति" इति दृश्यते। एभिः प्रमाणवचनैः कालिदास एषां स्तवानां कर्तेति ज्ञायते। घटस्तवः सरस्वतीकण्ठाभरणे काव्यप्रकाशे च समुद्धृतः। किं धर्माचार्यो भोजकालिककालिदासतोऽभिन्नः? अत्रावधातव्यमन्वेषणपरायणैर्विद्वद्भिः।

३. सोमतिलकसूरिणा विरचिता, अड्यारपुस्तकालयसूचीपत्रं द्रष्टव्यम्।

दीपकाचार्यो दीपकनाथो वात्रत्यायां सिद्धौघपरम्परायां चतुर्थः। एष च दीपकनाथ ऋजुविमर्शिनीकारेण शिवानन्देन "अस्मद्गोत्रमहत्तर·······दीपकाचार्यो दण्डककर्ता" इत्येवं स्मृतः। दण्डकपदेन चात्र त्रिपुरसुन्दरीदण्डकं गृह्यते। त्रिपुरसुन्दरीदण्डकं चैतद् विद्यानन्देनार्थरत्नावल्यां स्थलद्वये समुद्धृतम्। भास्कररायेण सेतुबन्धे व्याख्यातृमतभेदप्रसङ्गे "दीपकाचार्यास्तु·······" (४।३) इत्येवं दीपकाचार्यव्याख्यानमुद्धृतम्। वामकेश्वरीमतविवरणे जयरथः—"पूर्वाचार्या अप्याहुः—आश्रीदीपकनाथतो ह्यगणितैरद्यापि वृत्तिः कृता" (पृ० ११५) इत्याह। दीपकनाथो वामकेश्वरतन्त्रस्य प्रथमो व्याख्यातेत्यनेन ज्ञायते। एवमेव जयरथेन "पूर्वे श्रीदीपिकाचार्यप्रमुखा गुरवो मम" इति मङ्गलाचरणश्लोकेपूक्तम्। अत्र 'दीपकाचार्य' इति पाठः प्रतिभाति। वामकेश्वरीमतभूमिकालेखकेन दीपिकाचार्यपदेन योगिनीहृदयदीपिकाकारस्य योगिनोऽमृतानन्दस्य पुण्यानन्दशिष्यस्य ग्रहणं कृतम्। डा०कान्तिचन्द्रपाण्डेयमहोदयेन[1] तु दीपिकानाथ इति नाम स्थापितम्। तदुभयं नोचितम्, अत्र चतुर्थस्य सिद्धाचार्यस्य दीपकनाथस्यैव ग्रहणात्। सोऽयं दीपकनाथस्त्रिपुरसुन्दरीदण्डकस्य कर्ता, वामकेश्वरतन्त्रस्य च प्रथमो व्याख्याता।

कल्याणस्तवो भास्कररायेण स्वकीये ललितासहस्रनामभाष्ये सौभाग्यभास्कराख्ये (पृ० ७३-७४) समुद्धृतः। एष स्तवः कल्याणदेवेन हादिविद्यामानवौघगुरुषु पञ्चमेन रचितो भवेत्। संकेतपद्धतिनामको ग्रन्थोऽर्थरत्नावल्यां बहुशः, योगिनीहृदयदीपिकायाम्, नटनानन्दकृतायां कामकलाविलासटीकायां चिद्वल्ल्यां चोद्धृतः। अत्रत्या अनेके श्लोकाः शिवानन्देनाप्यृजुविमर्शिन्यामभियुक्तकृतित्वेनोल्लिखिताः। कोऽस्याः संकेतपद्धतेः कर्तेति न परिज्ञायते। महत्त्वपूर्णोऽयं ग्रन्थ इत्यर्थरत्नावलीस्थतदुद्धरणानि दृष्ट्वोच्यते। नास्य ग्रन्थस्य कापि मातृकाऽद्यावध्युपलब्धा। त्रिपुरसुन्दरीकल्पलता, हंसपारमेश्वरम्, रसेन्द्रसारसंग्रहश्च ऋजुविमर्शिन्यामर्थरत्नावल्यां च समुद्धृतानि। हंसपारमेश्वरं योगिनीहृदयदीपिकायामपि समुद्धृतम्। त्रिपुरासारसमुच्चयस्त्रिपुरासारो वा नागभट्टकृतिर्गोविन्दाचार्यकृतव्याख्यया समलङ्कृतः कलिकातानगरीतः सप्तनवत्युत्तराष्टादशशततमे (१८९७) ई० वर्षे प्रकाशितः। मूलग्रन्थस्योद्धरणद्वयमृजुविमर्शिन्यां दृश्यते। अतो नागभट्टः शिवानन्दतः प्राचीनः सिद्ध्यति। भट्टगङ्गाधरस्तोत्रमृजुविमर्शिन्यामुद्धृतम्। अत्रत्याः श्लोका महार्थमञ्जरीपरिमले योगिनीहृदयदीपिकायां चिद्वल्ल्यां च दृश्यन्ते। किं नामकमिदं स्तोत्रमिति तु न ज्ञायते।

## शिवानन्दस्य देशकालौ

महार्थमञ्जरीकर्ता महेश्वरानन्दो दाक्षिणात्य इति स एवोवाच[2]। तस्य परमगुरुः शिवानन्दोऽपि तत्रत्य एव प्रतीयते। तत्रैवास्यानेकेषां ग्रन्थानां मातृका उप-

---

१. 'अभिनवगुप्त' इत्याख्ये ग्रन्थे, द्वितीये संस्करणे, पृ० ५८१।

२. महार्थमञ्जरीपरिमले, पृ० २०२।

लब्धाः। पुण्यानन्दामृतानन्दावपि तत्रत्यावेव स्याताम्। यद्यप्यनयोर्ग्रन्थानां सार्वत्रिकः प्रचारस्तथाप्यमृतानन्देन दीपिकायां शिवानन्दस्य सुभगोदयवासना, सौभाग्यहृदयस्तोत्रं च बाहुल्येनोद्धृतमभियुक्तपदप्रयोगपुरःसरम्। शिवानन्दामृतानन्दनाथौ हादिविद्यापरम्परायां स्वकीयां स्थितिं स्वयमेव प्रतिपादयामासतुरिति पूर्वमेवोक्तम्।

अभिनवगुप्तपादशिष्यः क्षेमराजः, तद्विरचितं साम्बपञ्चाशिकाविवरणम्, प्रत्यभिज्ञाहृदयसूत्राणि च शिवानन्देनोद्धृतानि। योगिनीहृदयदीपिकाकारेणामृतानन्दनाथेन च स्वकृतौ शिवानन्दविरचिता सुभगोदयवासना स्मृता। अतः क्षेमराजतः पश्चात्तनोऽमृतानन्दतश्चार्वाग्भवः शिवानन्द इत्यङ्गीकर्तव्यम्। अमृतानन्दस्य गुरोः पुण्यानन्दस्य कृतेः कामकलाविलासस्य श्लोका लक्ष्मीधरेण सौन्दर्यलहरीटीकायां लक्ष्मीधरायामुद्धृताः[1]। अतः क्षेमराजलक्ष्मीधरयोः स्थितिकालौ शिवानन्दस्य स्थितेः पूर्वापरे सीमनी मन्तव्ये।

अर्थरत्नावलीकारो विद्यानन्दनाथः शिवानन्दतोऽर्वाचीनः प्राचीनो वेत्यधुना न निश्चेतुं शक्यते, तथापि स शिवार्चनचन्द्रिकासौभाग्यरत्नाकरादिकर्तुः सच्चिदानन्दनाथशिष्याद् विद्यानन्दनाथतो नूनं भिन्न एव प्राचीनश्च[2]।

शिवानन्दस्य कृतिर्ऋजुविमर्शिनी सरस्वतीभवनग्रन्थमालायां नातिविलम्बं प्रकाशयिष्यते। क्रमवासनापरपर्यायायाः सुभगोदयवासनाया मातृके मद्रपुरीराज्यपुस्तकालये केरलविश्वविद्यालयपुस्तकालये च विद्येते। अस्य सौभाग्यहृदयस्तोत्रस्य मातृकाऽनेन निबन्धलेखकेन पुण्यपत्तनस्थे इतिहाससंशोधनसंस्थापुस्तकालये दृष्टा। एतद् ग्रन्थद्वयं महार्थमञ्जरीपरिमले दीपिकायां चिद्वल्ल्यां चानेकत्रोद्धृतम्। शम्भ्वैक्यदीपिकाऽस्यैव शिवानन्दस्य कृतिः। अस्या अप्यपूर्णा मातृका मद्रपुरीराज्यपुस्तकालये विद्यते। त्रिपुरसुन्दरीमन्दिरस्तोत्रं संवित्स्तोत्रं च शिवानन्दकृतित्वेन महार्थमञ्जरीपरिमले[3] उट्टङ्कितम्। स्वतन्त्रानन्दनाथकृतिर्मातृकाचक्रविवेकः शिवानन्दरचितया टीकया सह सरस्वतीभवनग्रन्थमालायां प्रकाशितः। सोऽयं शिवानन्द[4] ऋजुविमर्शिनी-

---

१. द्रष्टव्यम्—मद्रपुरीमुद्रितं १९५७ ई० संस्करणम्, पृ० १६३।

२. श्रीनिवासभट्टापरनामधेयेन विद्यानन्दनाथेन १६३० तमे वैक्रमे वत्सरे सौभाग्यरत्नाकरो विरचित इति योगिनीहृदयद्वितीयसंस्करणस्यानुप्रास्ताविके घपृष्ठे द्रष्टव्यम्। स्वकृतायां शिवार्चनचन्द्रिकायामनेन स्वकृतीनां नामोल्लेखः कृतः, तत्रार्थरत्नावली न दृश्यते। गुरवोऽपि द्वयोर्भिन्ना एव। अर्थरत्नावलीकारो विद्यानन्दः शिवानन्दस्य समसामयिकः स्यात्।

३. द्रष्टव्यम्—पृ० १९५,१२९।

४. शिवानन्दं च सौभाग्यप्रपञ्चोद्योतपद्धतेः।
कर्तारं मातृकाचक्रव्याख्यानख्यातसत्कथम्॥

इति परमानन्दतन्त्रटीकामङ्गलश्लोकेषु दृश्यते। सौभाग्यकल्पद्रुमकारमाधवानन्दनाथादिभिरनुसृतः परमानन्दसम्प्रदायः पश्चात्तनः। एतत्सम्प्रदायानुसारिणी सौभाग्यप्रपञ्चोद्योतपद्धतिर्येन शिवानन्देन रचिता, तेनैव मातृकाचक्रविवेकोऽपि व्याख्यात इत्यनेन ज्ञायते।

कारतो भिन्न एव। सिद्धसिद्धान्तसिन्धुकारो जगन्निवासात्मजो गोस्वामिशिवानन्दश्चाभ्यां भिन्नः।

योगिनीहृदयदीपिकायां ज्ञानदीपविमर्शिनीनामकः पद्धतिग्रन्थ उद्धृतः[१]। अस्य ग्रन्थस्य मातृका बटोदर( बड़ोदा )नगरस्थगायकवाडशोधसंस्थापुस्तकालये, केरलविश्वविद्यालयपुस्तकालये, नेपालस्थवीरपुस्तकालये च सन्ति।

चिद्विलासः, तत्त्वदीपविमर्शिनी, [२]सौभाग्यसुधोदयश्चामृतानन्दस्य कृतयः सन्ति। अस्य योगिनीहृदयदीपिका प्रकाशितैव। चिद्विलासस्तवः श्रीरङ्गस्थेन वाणीविलासमुद्रणालयेन प्रकाशितः। अस्य परिष्कृतं संस्करणमनेन निबन्धलेखकेन सज्जीक्रियते। तत्त्वदीपविमर्शिन्या एका मातृका केरलविश्वविद्यालयपुस्तकालयेऽस्ति, साऽमृतानन्दकृतिरेव संभवेत्। सौभाग्यसुधोदयस्य द्वे मातृके अड्यारपुस्तकालये, एका च मातृका केरलविश्वविद्यालयपुस्तकालयेऽस्ति। तिसृभिराभिर्मातृकाभिर्दीपिकासाहाय्येन च संशोध्यास्यापि संस्करणमनेन निबन्धलेखकेन सज्जीक्रियते।

महेश्वरानन्देन तद्गुरुणा महाप्रकाशेन च रचिता अनेके ग्रन्था महार्थमञ्जरीपरिमले समुद्धृताः। ते च बाहुल्येन क्रमदर्शनानुसारिण इत्यत्र त्रैपुरदर्शनप्रस्तावे न चर्च्यन्ते।

ब्रह्माण्डपुराणे ( ४।३८।८-१० ) दशधा ललितामन्त्राः प्रतिपादिताः। ज्ञानार्णवतन्त्रे तु द्वादशे पटले द्वादश विद्याः सूचिता मनु-चन्द्र-कुबेरादिभिरुपासिताः। तत्र लोपामुद्राभिधा हादिविद्या, कामराजोपासिता कादिविद्या च प्रथिततमे। बहुप्रकारा बहुकालव्यापिनी चेयं त्रिपुरासम्प्रदायपरम्परा। हादिविद्याग्रन्थानां ग्रन्थकाराणां चात्र कियान् परिचय उपस्थापितः। सन्ति विद्यानन्दनाथ-शङ्करानन्दनाथ-भास्कररायप्रभृतयो ग्रन्थकाराः, सौभाग्यरत्नाकर-सुन्दरीमहोदय-वरिवस्यारहस्यादयश्च ग्रन्थाः कादिविद्यायाः। स्वल्पकायेऽस्मिन् निबन्धे सर्वेषां परिचयो नोपस्थापयितुं शक्यते। अतोऽद्य विस्तरभियाऽत्रैव विरम्यते[1] ॥



---

१. द्रष्टव्यम्—पृ० १६०।

२. योगिनीहृदयदीपिकायामनेकश उद्धृतं सौभाग्यसुभगोदय इति नाम पाठभेदप्रयुक्तम्। वस्तुतस्तु सौभाग्यसुधोदय इत्येवास्य ग्रन्थस्य नाम। तदेव च स्वयं ग्रन्थकारस्य भास्कररायप्रभृतीनां च सम्मतम्।

1. अखिलभारतीयप्राच्यविद्यापरिषदो द्वाविंशतमेऽधिवेशने पण्डितपरिषदि पठितोऽयं निबन्धः—सम्पादकः।

# श्रीमद्भागवतस्य वोपदेवकर्तृत्वनिरासः

श्रीकृष्णमणित्रिपाठी, व्याख्याता वा० सं० वि० वि०, वाराणसी।

आधुनिकाः केचन समालोचकाः कथयन्ति यच्छ्रीकृष्णभक्तस्य गीतगोविन्दप्रणेतुः पीयूषवर्षिणो जयदेवकवेर्भ्रात्रा वोपदेवेन श्रीमद्भागवतं विरचितम्, न तु वेदव्यासप्रणीतं तत्। परमेषां कल्पना सर्वथासत्या असंगता अप्रामाणिकी च प्रतिभाति, यतो हि जयदेवेन वोपदेवेन चाभ्यां कविवराभ्यां स्वस्मिन् स्वस्मिन् ग्रन्थे यावात्मनोः परिचयौ प्रदत्तौ स्ताभ्यामुभौ सहोदरौ न सिद्ध्यतः। मृदुपदललितस्य रसध्वन्यलङ्काररागतालादिलक्षणलक्षितस्य सरलशब्दविन्यासप्रधानस्य शृङ्गारभाण्डागारस्य सुप्रबन्धस्य गीतगोविन्दस्य महाकाव्यस्य द्वादशे सर्गे जयदेवेनात्मनः परिचयप्रसङ्गे स्पष्टमुक्तं यत्—

श्रीभोजदेवप्रभवस्य राधादेवीसुतश्रीजयदेवकस्य।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु॥

वोपदेवश्च स्वरचितमुक्तबोधव्याकरणस्यान्तिमे भागे आत्मनः परिचयमेवं दत्तवान्—

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम्॥
द्यौर्वाचस्पतिनेव पन्नगपुरी शेषाहिनेवाभवद्
येनैकेन विदुष्मती वसुमती मुख्येन संख्यावताम्।
सोऽयं व्याकरणार्णवैकतरणिश्चातुर्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः॥

एवं च जयदेवेन स्वकीयो जनको भोजदेवः स्वीकृतः, जननी च राधा (रामा) देव्यभिमता। इतिहासकाराश्चैनमुत्कलप्रान्तीयजगन्नाथपुरीपरिसरे वर्तमानस्य बिन्दुबिल्वग्रामस्य निवासिनं वङ्गीयं ब्राह्मणं मन्यन्ते। किन्तु वोपदेवो निजनिर्मिते मुक्तबोधे आत्मानं धनेशशिष्यं भिषक्शिरोमणेः केशवसेनस्यात्मजं स्वीकरोति। एवंस्थितावुभयोः सहोदरसिद्धिसाधनप्रयास इतिहासानामनभिज्ञतामेव व्यनक्ति।

किञ्च, चन्द्रदत्तकृते भक्तमाले एकोनचत्वारिंशत्सर्गमारभ्यैकचत्वारिंशत्सर्गपर्यन्तं (३९-४१) त्रिभिः सर्गैर्जयदेवकवे रुचिरं चरित्रं चर्चितमस्ति। तेनापि स उत्कलप्रान्तीयविन्दुविल्वाभिधस्य ग्रामस्य वास्तव्यो ब्राह्मणः सिद्ध्यति—

जगन्नाथपुरीप्रान्ते देशे चैवोत्कलाभिधे।
बिन्दुविल्व इति ख्यातो ग्रामो ब्राह्मणसङ्कुलः॥
तत्रोत्कले द्विजो जातो जयदेव इति श्रुतः।
विद्याभ्यासरतः शान्तः पुरुषोत्तमपूजकः॥ इति।

अपि च, वङ्गदेशाधिपतेर्वल्लालसेनस्य सूनोर्लक्ष्मणसेनस्य सभागृहद्वारस्योपरि शिलायामुत्कीर्णस्य—

गोवर्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥

इति पद्यस्य पर्यालोचनया जयदेवो लक्ष्मणसेनस्य सभापण्डित आसीदित्यसंशयं सिद्ध्यति। लक्ष्मणसेनश्च ख्रिस्तसंवत्सरस्यैकादशशतकसमाप्तिपर्यन्तं वङ्गदेशं पालयामासेतीतिहासविदो वदन्ति। अत एव जयदेवकवेर्जीवनसमयोऽप्येकादशशताब्द्यामेव फलति।

किञ्चेतिहासकारैर्देवगिरेर्यादवराज्ञो रामचन्द्रस्य राज्यकाल १२१७ ईशवीयवर्षतः १३०९ पर्यन्तं स्वीक्रियते। तन्मन्त्रिणो हेमाद्रेः प्रसन्नतायै कविराजो वोपदेवो व्याकरणस्य १०, आयुर्वेदस्य ९, ज्यौतिषस्य १, साहित्यस्य ३, भागवततत्त्वस्य च ३, सङ्कलनया २६ ग्रन्थान् व्यरचयत्। तत्र भागवततत्त्वं वर्णयितुं वोपदेवेन परमहंसप्रिया-हरिलीलामृत-मुक्ताफलनामकास्त्रयो ग्रन्था निर्मिताः। तत्र मुक्ताफलस्य टीकां कुर्वता हेमाद्रिणा वोपदेवनिर्मितग्रन्थानामेवं निर्देशः कृतोऽस्ति—

यस्य व्याकरणे वरेण्यघटनास्फीताः प्रबन्धा दश
प्रख्याता नव वैद्यकेऽपि तिथिनिर्धारार्थमेकोऽद्भुतः।
साहित्ये त्रय एव भागवततत्त्वे त्रयस्तस्य च
भूगीर्वाणशिरोमणेरिह गुणाः के के न लोकोत्तराः॥

यदि वोपदेवेन श्रीमद्भागवतं विरचितं स्यात्तर्हि तदाश्रयदात्रा हेमाद्रिणा वोपदेवनिर्मितग्रन्थानां गणनाप्रसङ्गे तच्चर्चाऽवश्यमेव कृता स्यात्।

अपि च, निम्नाङ्कितैर्दृढतरैर्हेतुभिः श्रीमद्भागवतं व्यासकृतमेव सिद्ध्यति, न कथमपि तद् वोपदेवकृतं भवितुमर्हति—

(१) विश्वविश्रुतस्य वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनाख्ये पुस्तकालये ११८१ ईशवीयवर्षे प्राचीनलिप्यां लिखितमेकं श्रीमद्भागवतं सुरक्षितमस्ति। पुस्तकमिदं तदा लिखितमस्ति यदा वोपदेवस्य जन्मापि नासीत्। यदि श्रीमद्भागवतं वोपदेवकृतं स्यात्तर्हि तज्जन्मनः पूर्वं कथं लिखितं स्यात् ?

(२) विभिन्नानां गवेषकाणां कल्पनानुसारं श्रीस्वामिनः शङ्कराचार्यस्य समय ईशापूर्वपञ्चमीशताब्दीत ईशासप्तमशताब्दीमध्ये स्वीक्रियते। तेन पद्मपुराणीयवासुदेवसहस्रनामावलीटीकायां श्रीमद्भागवतस्य श्लोकद्वयमुद्धृतमस्ति। तथाहि—

आभासश्च निरोधश्च यतश्चाध्यवसीयते।
स आश्रयः परं ब्रह्म परमात्मा परात्परः॥
(२।१०।७)

पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्॥
(१।३।४)

अपि च, सर्वसिद्धान्तसंग्रहे—"परमहंसधर्मो भागवते पुराणे कृष्णेनोद्धवायोपदिष्टः" इति वदता तेन श्रीमद्भागवतस्य स्पष्टतया सङ्केतः कृतोऽस्ति। यदि त्रयोदशशताब्द्यां समुत्पन्नेन वोपदेवेन श्रीमद्भागवतं कृतं तर्हि सप्तमशताब्दीवर्तिना श्रीशङ्कराचार्येण स्वग्रन्थे श्रीमद्भागवतस्य चर्चा कथंकारं कृता ?

(३) श्रीस्वामिशङ्कराचार्यस्य गुरोर्भगवत्पूज्यपादगोविन्दानन्दस्वामिनो गुरुणा गौडपादाचार्येण पञ्चीकरणव्याख्यायां श्रीमद्भागवतस्य प्रथमस्कन्धीयतृतीयाध्यायस्य प्रथमश्लोकस्तथा दशमस्कन्धीयचतुर्दशाध्यायस्य तृतीयश्लोकश्चोद्धृतौ स्तः—

जगृहे पौरुषं रूपं भगवान् महदादिभिः।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया॥
(१।३।१)

श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनः ।। इति ।
( १०।१४।४ )

यदि नाम व्यासकृतं भागवतं तदानीं न स्यात्तर्हि कथमिदं श्लोकद्वयं गौड-पादाचार्येण तत्राङ्कितं स्यात् ?

( ४ ) ११९९ ईशवीये वर्षे समुद्भूतेन द्वैतसम्प्रदायप्रवर्तकेन श्रीमध्वाचार्येण श्रीमद्भागवते 'तात्पर्य'नाम्नी टीका कृतास्ति । तत्र श्रीमद्भागवतस्य टीकाकर्तुर्हनुमदाचार्यस्य चित्सुखाचार्यस्य च नाम निर्दिष्टमस्ति । यदि ततः पूर्वं श्रीमद्भागवतं प्रामाणिकं न तर्हि तेन कथं तत्र टीका कृता स्यात् ?

( ५ ) १०१७ ईशवीयवर्षे आविर्भूतेन विशिष्टाद्वैतसम्प्रदायप्रवर्तकेन श्रीरामानुजाचार्येण स्वकीये वेदान्तसारनामके ग्रन्थे श्रीमद्भागवतस्य बहवः श्लोकाः समुद्धृताः सन्ति । वेदार्थसंग्रहे च सात्त्विकपुराणगणनायां श्रीमद्भागवतस्याप्युल्लेखः कृतोऽस्ति । एतेनासंशयं वोपदेवात् पूर्वं श्रीमद्भागवतस्य सत्ता सिद्ध्यति ।

( ६ ) दशमशताब्द्यां वर्तमानेन काश्मीरस्य प्रधानविदुषाऽभिनवगुप्तपादाचार्येण प्रत्यभिज्ञासम्प्रदायस्थापनाय गीताया एकाभिनवा व्याख्या कृतास्ति । तत्र तेन चतुर्दशाध्यायस्याष्टमश्लोकव्याख्यायां श्रीमद्भागवतस्य कियन्तः श्लोका उद्धृताः सन्ति । यदि नाम श्रीमद्भागवतं तदानीं न स्यात्तदा तस्य ते श्लोकास्तत्र कथमुद्धृताः स्युः ?

( ७ ) ईश्वरकृष्णस्य सांख्यकारिकायां माठराचार्येण माठरवृत्तिनाम्न्येका प्रामाणिकी व्याख्या लिखितास्ति । यस्याः ५५७-५६७ मध्यवर्तिना बौद्धविदुषा परमार्थेन चीनभाषायामनुवादो विहितः । माठराचार्येणात्मवृत्तौ निम्नाङ्कितौ श्रीमद्भागवतस्य श्लोकावुद्धृतौ स्तः—

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया विभुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनम् ।।
( १।६।३५ )

यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् ।
भूतहत्यां तथैवेमां न यज्ञैर्मार्ष्टुमर्हति ।।
( १।८।५२ )

एतेन षष्ठशताब्द्यां श्रीमद्भागवतस्यास्तित्वं स्पष्टं सिद्ध्यति, तर्हि कथं त्रयोदश-शताब्दीवर्तिना वोपदेवेन तत्कृतं स्यात् ?

( ८ ) इतिहासानुसारं ९९७—१०३० पर्यन्तं गजनीस्थो महमूदो भूयो भूयो भारतमाक्रम्य निर्दयमलूलुठत्। तदा अल्वेरुणीनामा यवनयात्री भारते स्थित्वा हिन्दुशास्त्राणामनुशीलनं विधाय १९३० ईशवीये वर्षे पुस्तकमेकमलिखत्। तत्र तेन विष्णुपुराणस्य श्रीमद्भागवतस्य च स्पष्टं नाम संगृहीतम्। यदि नाम व्यासकृतं श्रीमद्भागवतं तदानीं न स्यात्तर्हि तत्र तेन तस्य नाम कथं संगृहीतम् ?

( ९ ) वीरगाथाकालिको हिन्द्या आदिकविश्चन्द्रवरदाई ११८१ ईशवीये वर्षे लिखिते स्वकीये पृथ्वीराजरासोनामके महाकाव्ये तक्षकद्वारा दष्टस्य राज्ञः परीक्षितः प्रसङ्गे श्रीमद्भागवतस्य स्पष्टं नामोल्लेखं कृतवानस्ति। यदि नाम तदानीं श्रीमद्भाग-वतस्य लोके प्रसिद्धिर्न स्यात्तदा तेन कथं तस्योल्लेखो कृतः ?

( १० ) एतदतिरिक्ता भारतीया मान्यतमा अवतारकल्पा वल्लभाचार्यप्रभृतय आचार्यवर्याः कृतानुभवा महान्तः सन्तो निबन्धकारा लेखका विशिष्टा विद्वांसश्च स्वस्वकृतिषु व्यासप्रणीतयेव मत्वा श्रीमद्भागवतस्य वचनानि स्वोल्लासमुद्धृत्य स्वाः स्वाः कृतीर्गौरवान्विता अमन्यन्त। अनेकाश्च टीकास्तत्र लिखिताः। यद्येवं सर्वश्रद्धा-स्पदं सकलसिद्धान्तसिद्धं श्रीमद्भागवतं व्यासकृतमेवाभिमतं तर्हि कथंकारं तद् वोप-देवकृतं मन्तुं शक्येत ?

एतावता प्रपञ्चेन निर्विवादं सिद्ध्यति यच्छ्रीमद्भागवतं वोपदेवाद् बहुपूर्वं व्यासदेवेन निर्मितं न तत्र वोपदेवस्पर्शकलङ्कपङ्कः सम्भवति। अतः श्रीमद्भागवतं व्यासकृतमेवास्ति। न कथञ्चित्तद् वोपदेवकृतं भवितुमर्हति। अत्र वास्तविकं रहस्यं त्विदमस्ति—यथा भगवतः श्रीकृष्णस्य परमभक्तेन श्रीधरस्वामिना श्रीमद्भागवतस्य प्रत्यध्यायं विषयं संगृह्यैकैकं श्लोकं निर्माय भागवतमञ्जरीनामको ग्रन्थः सङ्कलित-स्तथैव वोपदेवेनापि हरिलीलामृतनामके ग्रन्थे श्रीमद्भागवतस्य सारः संगृहीतः। हरिलीलामृतस्य द्वितीयं नाम भागवतानुक्रमणिकाप्यस्ति। तामेवाश्रित्य श्रीमद्भागवतं वोपदेवेन कृतमिति केषाञ्चिद् भ्रमो जातः। एनामेव भ्रमपरम्परामादायाधुनिकाः केचन समालोचका अपि श्रीमद्भागवतं वोपदेवेन कृतं न वेदव्यासप्रणीतं तदित्येवं मिथ्याप्रचारे प्रवृत्ताः। नास्त्यत्र किञ्चिद् वास्तविकं प्रमाणम्।

अयमिदानीमपरः प्रश्नः समुपतिष्ठते यच्छ्रीमद्भागवतस्य रचना कदाऽभवत् ? अत्र ब्रूमः—पद्मपुराणान्तर्गतश्रीमद्भागवतमाहात्म्ये त्रयाणां श्रोतॄणां प्रवक्तॄणां च विद्यते ।

( क ) तत्र द्वापरयुगस्यान्ते भगवति श्रीकृष्णेऽवतारप्रयोजनं निष्पाद्य स्वधामोपगते कलियुगस्य त्रिंशद्वर्षेषु व्यतीतेषु भाद्रकृष्णनवम्यामात्मारामो महात्मा व्यासात्मजो भगवान् श्रीशुकदेवमुनिर्मुक्तिकाममात्मानमुद्धर्तुमुद्यतं राजानं परीक्षितमघौघविध्वंसपटीयस्याः परमपुनीतायाः भगवत्या भागीरथ्या गङ्गाया मुनिवृन्दाश्रिते पूततमे तटे श्रीमद्भागवतसप्ताहं श्रावयामास ।

आकृष्णनिर्गमात्त्रिंशद् वर्षाधिकगते कलौ ।
नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥

( ६।९४ )

( ख ) कलियुगस्य त्रिंशदुत्तरशतद्वय( २३० )वर्षेषु व्यतीतेष्वाषाढशुक्लनवम्यां ज्ञानी गोकर्णः स्वभ्रातरं धुन्धुकारिणं श्रीमद्भागवतसप्ताहं श्रावयितुं प्रववृते ।

परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ।
शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत् कथाम् ॥

( ६।९५ )

( ग ) कलियुगस्य षष्ट्युत्तरशतद्वय( २६० )वर्षेष्वतिक्रान्तेषु कार्तिकशुक्लनवम्यां ज्ञाननिधिर्भगवान् सनत्कुमारो देवर्षिं नारदं श्रीमद्भागवतमुपदिदेश—

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षं गते सति ।
ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥

एतेनेदं सिद्ध्यति यत्—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ॥

( १।४।१४ )

इति श्रीमद्भागवतीयपद्यानुसारं द्वापरयुगस्यान्ते कलेः प्रारम्भे वसिष्ठात्मजस्य शक्तिमुनेः पुत्रात् पराशराद् मत्स्योदरीगर्भसमुद्भूतो भगवान् वेदव्यासो लीला-

पुरुषोत्तमस्य भगवतः श्रीकृष्णस्य द्वारवतीलीलासंवरणपूर्वकं स्वधामगमनानन्तरं त्रिंशद्वर्षाभ्यन्तर एव भक्तिरसप्रधानं पुराणतिलकं श्रीमद्भागवतं निर्माय शुकदेवादीनध्यापयामास। एतेनापि श्रीमद्भागवतं व्यासकृतमेव सिद्ध्यति, न तु वोपदेवकृतं सम्भवति तत्।

अपि च वोपदेवेन स्वकृतग्रन्थस्य श्रीमद्भागवतस्य व्यासनाम्ना प्रख्यापनेन न कोऽपि हेतुः सम्भवति। नहि कोऽपि मूढ औरसीमात्मजां प्रजां परनाम्ना प्रख्यापयति लोके। ननु लोकलज्जयाऽत्मजामपि प्रजामन्यजामिव गोपायन्ति केचन, कंसभयाद् वसुदेवेन तथानुष्ठितमिति चेन्न, तस्यापद्विषयकत्वकल्पनेनादोषात्। महता प्रयासेन ललितप्रबन्धरचनाविशेषैर्विष्णोर्भक्तिभराक्रान्तं श्रीमद्भागवतं स्वनाम्ना प्रख्यापितं चेत् पौरुषं काव्यमित्येव वदेयुर्लोकास्तथा सति ग्रन्थमहिम्नो हानिरेव स्यादित्यापदं विजानता वोपदेवेन व्यासनाम्ना प्रख्यापितं श्रीमद्भागवतमिति कथनं तु न विचारसहम्। अन्ततः श्रीकृष्णो वसुदेवपुत्र इति प्रसिद्धिवत् श्रीमद्भागवतं वोपदेवकृतमिति विद्वत्समाजे प्रसिद्धिर्नास्ति। किञ्च, भगवदाज्ञया कंसभयाद् वसुदेवेन तथा कृतम्, परमत्र न कश्चित्तादृशो हेतुर्लक्ष्यते।

एवंस्थितावपि वोपदेवेनैव कृतं श्रीमद्भागवतमिति दुराग्रहश्चेत्, तथापि न काप्यनुपपत्तिः। यथा कश्चिद् दरिद्रो दैववशादमूल्यं महामणिं लब्ध्वा तेनात्मानं भूषयितुमयोग्यं मन्यमानस्तं राज्ञे निवेद्य प्रार्थयति, राजन्! मया लब्धोऽयं मणिः, त्वमर्हस्यनेनात्मानं भूषयितुमित्युक्त्वा तस्मै समर्पयति। तेन च सन्तुष्टो राजा धनादिदानेन दरिद्रं संवर्ध्य तेन मणिनामात्मानं भूषयति। तथा सति यथा—राज्ञो मणिरित्येव व्यवह्रियते लोके न दरिद्रस्य, तथैव ग्रन्थप्रसिद्धिलोभाकृष्टेन वोपदेवेन व्यासायार्पितं श्रीमद्भागवतमिति चेत्तर्हि व्यासकृतमेव मत्वा निष्प्रत्यूहमेव शिरसा धार्यम्। यथा विष्णवेऽर्पितं हारं तत्प्रसादत्वेन शिरसा वहन्ति लोकास्तथैव व्यासप्रसादीभूतं श्रीमद्भागवतं नात्र वोपदेवसत्तालेशोऽपीति मत्वा सन्तोष्टव्यम्।

ननु व्यासकृतेषु पुराणेषु यथा भाषाभावगम्यानि सरलानि पद्यानि लभ्यन्ते, न तादृशानि सन्ति पद्यानि श्रीमद्भागवते। किन्त्वत्र भाषाप्रवाहो भावगाम्भीर्यं वर्णनशैलीविजृम्भणमलङ्कारविन्यासबाहुल्यमपूर्वमेवास्ति। अतः श्रीमद्भागवतं व्यासकृतं भवितुं नार्हति। अत्रोच्यते—समाधियोगतो लब्धसकलतत्त्वरहस्येन ऋतम्भरप्रज्ञासम्पन्नेन येन महर्षिणा वेदव्यासेन वेदा व्यस्ताः, सर्वोपनिषदां सारभूता गीता

ग्रथिता, अध्यात्मदर्शने ब्रह्मसूत्रितम्, योगदर्शनभाष्यं च प्रणीतं यस्य चाप्रतिहत-मलौकिकं ज्ञानं पुराणेषु प्रदृश्यते, महाभारते चापूर्वं ग्रन्थप्रणयनकौशलमालोक्यते, यस्य विषये सत्येयं प्रतिज्ञा ज्ञायते—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

तेन वेदव्यासेन विविधछन्दोनिबद्धं भक्तिरसप्रधानं भावगाम्भीर्यभाषा-वैचित्र्यबहुलं लोकोत्तरशैलीसनाथमलङ्कारैरलङ्कृतं वेदान्तसारं श्रीमद्भागवतं निर्मातुमशक्यमिति व्यर्थदोषारोपणं साहसमात्रं प्रतीयते। यथा कश्चित् शिल्प्य-नायासेन सहस्रशो मूर्तीर्निर्माय लोके विशेषां कलां प्रदर्शयितुं कस्याञ्चिदेकस्यां मूर्तौ सर्वोच्चकलाकलापं कल्पयति, यथा वा विश्वनिर्मात्रा ब्रह्मदेवेन तिलोत्तमायां सर्वातिशयं सौन्दर्यं प्रदर्शितम्, तथैवान्यपुराणापेक्षया श्रीमद्भागवते व्यासद्वारा काव्य-कलातिशयसौन्दर्यप्रदर्शने न काप्यनुपपत्तिर्भवितुमर्हति।

अपि च, श्रीमद्भागवतं समाधिभाषायां भगवता वेदव्यासेन विरचितमतोऽत्र बहुविधच्छन्दोबद्धाया अलङ्कृताया भावगम्यायाः प्राञ्जलभाषायाः प्रयोगो जातः। यस्याध्ययनेनालौकिकस्यानन्दस्य परमोत्कृष्टस्य च सुखस्यानुभूतिर्भवति। अत एवानेकपुराणेषु गणनायां पञ्चमं महापुराणं स्वीकृतमपि श्रीमद्भागवतं सर्वतः पश्चान्निर्मितं मन्यते।

यत्तु सामयिकाः समालोचका यथा ऋग्वेदस्य प्रथमदशमयोर्मण्डलयोरन्य-मण्डलापेक्षया भाषाया अन्तरं समीक्ष्य तयोर्भिन्नकविकर्तृकत्वं साधयितुं प्रयतन्ते तथैवाधुनिका भाषाविज्ञानिनः समालोचका अपि व्यासकृतं महाभारतं प्रसादगुणसम्पन्नमनुष्टुप्छन्दोनिबद्धं चास्ति, तद्वर्णनशैली वाल्मीकिरामायणार्षपद्धताव-वलम्बिता वर्तते, किन्तु श्रीमद्भागवतेऽर्वाचीनैः कविभिः स्वीकृतायाः सालङ्कारायाः शब्दाडम्बरायाः समासबहुलायाः कवितायाः प्राचुर्यमस्ति। तथा बहुत्र प्रसङ्गानुकूलानां महतां छन्दसां प्रयोगोऽपि प्रदृश्यते। अतो भाषादृष्ट्या महाभारतश्रीमद्भागवतयो-र्द्वयोरप्येको व्यासो कर्ता भवितुं नार्हतीति यद् वदन्ति, तदपि न युक्तिसहम्।

यस्य भगवतो वेदव्यासस्याविर्भावो वेदपुराणयोः सङ्कलनार्थमेव जातः, तस्य भगवदवतारस्य त्रिकालदर्शिनो महर्षेर्व्यासस्य विभिन्नभाषालेखनासामर्थ्य-

कल्पनाऽविचाररमणीयतामेवावहति। अद्यतनीना ग्रन्थकारा एकस्य कस्यापि विषयस्य ज्ञातारः कामं भवन्तु नाम, स्वाधिकृतविषये एव लिखितुं योग्यतां बिभर्तु नाम। किन्तु व्याससदृशस्य चतुरस्रप्रतिभासम्पन्नस्यावतारिणो महापुरुषस्य विभिन्न-भाषाभावशैलीलेखने न भवितुमर्हति काप्यनुपपत्तिः।

अपि च महाभारतं न केवलं प्रसादगुणसम्पन्नमेव विद्यते, महाभारतस्यानु-क्रमणिकाध्याये आदिपर्वणि स्वयमेव भगवता व्यासेन प्रोक्तं यद् ८८०० एवंविधाः कूटश्लोकाः सन्ति, येषामर्थानहं शुकदेवश्च जानीवः। सञ्जयस्तेषामर्थान् सम्यग् जानाति न वेति महानस्ति सन्देहः—

अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।
अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा न वा॥
(१।१।२१।)

वस्तुतो महाभारतश्रीमद्भागवतयोर्भाषाभावभेदस्य मूलं कारणं तयोर्द्वयो-र्ग्रन्थयोः प्रतिपाद्यविषयभिन्नतैवास्ति। अस्ति महाभारतमैतिहासिको ग्रन्थः। अतस्तत्र वास्तविकताया बाहुल्यमपेक्ष्यते। यतो हि तत्र बहूनां व्यक्तीनां चरित्र-चित्रणातिरिक्तमनावश्यकभाषालङ्कारच्छन्दसां समावेशेन चरित्रचित्रणस्य मौलिकता दूरीभवितुमर्हति, पात्राणां स्वाभाविकतायाश्च विलयः सम्भाव्यते। अतो व्यास-सदृशस्य सिद्धहस्तकवेः प्रतिभायाः परिणामरूपस्य महाभारतस्य भाषा तादृश्येव सरलाऽपेक्षितास्ति।

श्रीमद्भागवतं तु सरसभक्तिरसप्रधानोऽस्ति ग्रन्थः। अतस्तत्र रसप्राधान्य-मपेक्षितमस्ति। यतो हि तत्र पाठकानां हृदयं वात्सल्यादिरसेनाप्लावयितुमावश्यकता-नुसारं विभिन्नानामलङ्काराणां सुमधुराणां गेयपद्यानां प्रयोगेण सहृदयहृदयानां तन्मयतापादनपूर्वकमात्मविस्मृतिद्वारानन्दसमुद्रे निमज्जनं नितान्तमावश्यकमस्ति। अतो भगवता वेदव्यासेन वर्ण्यविषयानुसारं श्रीमद्भागवते प्राञ्जलायाः सालङ्काराया भावगम्भीराया भाषायाः सरसायाः शैल्याश्च समावेशे प्रयासो विहितः।

तथा च महाभारतश्रीमद्भागवतयोः प्रतिपाद्यविषयभिन्नतां विस्मृत्य केवलं भाषाविज्ञानकल्पनाधारे उभयोर्महाभारतश्रीमद्भागवतयोर्विभिन्नकविकर्तृत्वकल्पना-साधनचेष्टापि सर्वथैवोपेक्षणीयतामर्हति।

पुराणेतिहासानुसारं भगवान् वेदव्यास ईश्वरावतारो मन्यते। तार्किक-बुद्धिशीला अप्येनं लोकोत्तरप्रतिभासम्पन्नं सकलकलाप्रवीणं महाकविं मन्यन्ते। अतो वेदविभाजन–पुराणप्रणयन-ब्रह्मसूत्रनिर्माण-गीताग्रथन-योगभाष्यादिरचना-कारको भगवान् वेदव्यासो यदि विभिन्नेषु ग्रन्थेषु बहुविधभाषा-रीति-वृत्ति-छन्दोलङ्कारादीनां प्रयोगं कुर्यात्तर्हि किमाश्चर्यं भवितुमर्हति। एकत्राख्यानोपाख्या-नादिभिः सरलया भाषया गूढातिगूढतरतत्त्वानां प्रकाशनमन्यत्र विदुषामपि दुरधिगम्यं ब्रह्मसूत्रनिर्माणं भगवतो व्यासस्य प्रतिभाया एव चमत्कारोऽस्ति। पुराणेषु परिष्कृतभाषायां भावप्रकटनं महाभारते च यत्र तत्र कूटश्लोकेषु तल्लेख-कस्यादिदेवस्य गणेशस्याप्याश्चर्यकरं निर्माणं व्यासातिरिक्तः को वा कविः कर्तुं पारयति। अन्यपुराणापेक्षया श्रीमद्भागवते यो हि भाषाभेद उपलभ्यते, स व्यास-देवस्य महिमानमेव व्यनक्ति। केवलं भाषाभेदाच्छ्रीमद्भागवतस्यान्यकर्तृत्वस्वीकारो न कथञ्चिद् युक्तिसहः। नहि केवलं व्यासरचितग्रन्थेष्वेव भाषाभेदो दृश्यते। किन्तु भगवत्पूज्यपादश्रीस्वामिशङ्कराचार्याणामपि ग्रन्थेषु भाषाभेदो दृश्यते। ये स्वामि-चरणा ब्रह्मसूत्रस्य शारीरिकभाष्ये ईदृशीं भावगम्यां भाषां लिखन्ति, यस्या वास्तविकं भावं ज्ञातुं साधारणा विद्वांसो न सहसा पारयन्ति, त एव विवेकचूडामणौ सर्वसाधारणां सुबोधां भाषां प्रयुञ्जते। उभयत्र भाषावैविध्यं विलोक्य कः कृती कथयितुं प्रभवेद् यदिदं ग्रन्थद्वयमेकस्यैव कवेः कृतिरस्ति।

आचार्याणां वार्ता तु दूरे तिष्ठतु, कविवरकालिदासस्य रघुवंशमेघदूतयो-र्भाषाया ईदृशं वैलक्षण्यं विद्यते यद् दृष्ट्वा पाठका आश्चर्यचकितास्तिष्ठन्ति। एवं श्रीहर्षस्य नैषधीयचरिते खण्डनखण्डखाद्ये च भाषाभेदं काव्यकलाकुशलाः सहृदय-हृदया विद्वांस एवावगन्तुं शक्नुवन्ति। अतः श्रीमद्भागवतेऽन्येषु पुराणेषु च भाषाभेदं समीक्ष्यान्यकविकृतिकल्पना न कथमपि न्यायोचिततामावहती-त्यलं पल्लवितेन॥



# विश्वोत्पत्तिविचारः

डा०मुरारिलालशर्मा, वा०सं०वि०वि०ज्यौतिषविभागे व्याख्याता।

विश्वशब्देनात्र भौतिकस्य विश्वस्य ग्रहणमभिप्रेतम्, अर्थात्तस्य प्रदेशविशेषस्य ग्रहणं कार्यं यत्र विद्युच्चुम्बकक्षेत्राणि, गुरुत्वाकर्षणक्षेत्राणि च सन्ति। शब्दान्तरैरयं स प्रदेशो यत्र भौतिकशास्त्रस्य नियमानां प्रयोगो भवति। आइन्स्टाइनमहोदयेनायं प्रदेशश्चतुरायामानां सातत्यरूपेण स्वीकृतो यत्र त्रय आयामा दिग्देशयोर्वर्तन्ते चतुर्थश्च कालरूपः। इदं विश्वं द्विविधमुपलभ्यते सूक्ष्मं स्थूलं च। सूक्ष्मविश्वे विद्युत्कणाः सन्ति येषां संज्ञा आधुनिकैर्वैज्ञानिकैः प्रोटोन-इलेक्ट्रोन-न्यूट्रनाख्याः कृताः सन्ति। अत्र प्रोटोनं धनं विद्युत्कणम्, इलेक्ट्रोनमृणविद्युत्कणम्, न्यूट्रनं च शून्यविद्युत्कणं वर्तते। एतेषां विद्युत्कणानां संख्याभेदेन विभिन्नानां मूलद्रव्याणूनां जन्म जायते, तापमानस्योत्पीडनस्य च परिस्थितिभेदेन विभिन्नानां मूलतत्त्वानामुत्पत्तिर्जायते, ये स्थूले विश्वे दृश्यन्ते। सूक्ष्मविश्वे विद्युच्चुम्बकक्षेत्रस्यादृश्यतरंगा अपि सन्ति। गुरुत्वाकर्षणक्षेत्रेण सुग्राह्यः पदार्थविशेषो द्रव्यम्। मूर्तद्रव्यस्य तिस्रोऽवस्था भवन्ति। तरलम्, यथा जलादि, गैसरूपम्—यथा धूमवाष्पादयः, दृढकायरूपञ्च—यथा मृत्पाषाणादिः। स्थूले विश्वे प्रायो मूर्तद्रव्याणां दर्शनं भवति, अस्मिन्निबन्धे स्थूलस्य जगतः केवलं बृहत्पिण्डानां खगोलीयपिण्डानामेव वर्णनं करिष्यते।

विश्वस्य स्थूलाः सदस्याः—सर्वप्रथमं वयं स्वीयं गोलं भूगोलमेव पश्यामः। प्राचीनकाले इदं विश्वस्य केन्द्रं स्वीक्रियते स्म, परमिदानीं सर्वैरेवास्य ग्रहेष्वेकतरत्वं स्वीकृतं वर्तते। इयं पृथ्वी स्वाक्षं परितः प्रतिदिनं भ्रमन्त्येकस्मिन् वर्षे सूर्यस्य परिक्रमां करोति। सूर्यं परितो ग्रहाः केपलरमहोदयस्य ग्रहगतिनियमैर्येषां न्यूटनमहोदयेन गुरुत्वाकर्षबलस्य नियमाधारितेन गतिशास्त्रेण संपुष्टिः कृतास्तैर्दीर्घवृत्ताकृतिषु मार्गेषु गच्छन्ति। सौरपरिवारस्यान्ये सदस्या धूमकेतवः, उल्काश्च सन्ति। धूमकेतवस्तु दूरदर्शकयन्त्रदृश्या बहवः प्रतिदिनमुपलभ्यन्ते, सामान्यजनानां हृदि भयोत्पादकाः पुच्छलज्योतिःस्वरूपास्तु कदाचिदेव दृश्यन्ते, उल्कास्तु क्षुद्रद्रव्यबिन्दुरूपा या भुव आकर्षणक्षेत्रमापतिता अतिवेगेन भुवमागच्छन्त्यो भुवो वायुमण्डलेन प्रदग्धाः सत्यः

क्षणमतितीव्रं प्रकाशं जनयन्ति। जनाश्च तदानीं तारकः पतित उल्कापातो वा जात इति कथयन्ति।

सौरमण्डलानन्तरं वयं तारकाभिः पूर्णं खगोलं पश्यामः। ताराणां प्रकाशे तीव्रता मन्दता च दृश्यते। इदं कान्तिमानं कथ्यते। कान्तिमानस्य तारतम्येन सर्वाधिकप्रकाशवतस्तारकस्य यदि कान्तिमानमेकतुल्यं स्वीक्रियते, तर्हि ततो न्यूनप्रकाशस्य तारकस्य कान्तिमानं द्वयं भविष्यति, ततो न्यूनप्रकाशस्य च कान्तिमानं त्रयं भविष्यतीत्यादि। षट्कान्तिमतस्तारकस्य प्रकाशापेक्षया पञ्चकान्तिमतस्तारकस्य प्रकाशः २.५ गुणो भविष्यति। ततश्चतुर्थकान्तिमतः पञ्चकान्तिमतस्तारकस्यापेक्षया पुनः २.५ गुणो भविष्यति। एवं रीत्यैककान्तिमतस्तारकस्य प्रकाशः षट्कान्तिमतस्तारकस्य प्रकाशापेक्षया शतगुणः। यन्त्रसाहाय्यं विना चक्षुर्मात्रेण दृश्यानां ताराणां संख्या सप्तसहस्रासन्ना वर्तते। केवलं चक्षुषा वयं षट्पर्यन्तं कान्तिमतस्तारकानेव द्रष्टुं समर्थाः। विश्वस्य बृहत्तमेन माउण्टपालोमारस्थितेन शतद्वयेञ्चव्यासेन परावर्तकेन दूरदर्शकयन्त्रेण दृश्यमानानामस्माकमाकाशगङ्गायास्तारकाणां संख्यैकखर्वं ($10^{11}$) आसन्ना वर्तते। अस्माकमाकाशगङ्गाऽपि स्थूलविश्वेऽस्माकं ध्यानं बलादाकर्षति। इयं वृश्चिकधनुषो राश्योर्मध्येऽतीव घना दक्षिणत उत्तरं गच्छन्ती प्रकाशकणानां सरिदिव प्रतिभाति। दूरदर्शकयन्त्रेण दृश्यमानेयं प्रतिस्थलं लक्षशस्तारकाणां समूहानि प्रकटयति। इयं तारापद्धतिः सर्पिलाकृतिर्वर्तते। वर्तमानशतकात् पूर्वं वैज्ञानिकाः सूर्यकेन्द्रिकं विश्वं मन्यन्ते स्म। परं शेपलेमहोदयेन गोलाकृतितारागुच्छानामनियमितां गतिमवलोक्य सूर्यसहितानां दृश्यताराणां केन्द्रमाकाशगङ्गायाः केन्द्रमेव निर्णीतम्, यद् धनुषो राशेर्दिशि वर्तते। अस्य विषुवधरातलस्य विस्तारापेक्षया ध्रुवप्रोतधरातलस्य विस्तारः स्वल्पो वर्तते। अस्माकं रविरस्यैकतरे सर्पिले भुजे विषुवधरातलासन्नं तिष्ठति। अत एव बाह्यप्रान्ताद् विलोक्यमानेयमस्माभिरतिदूरवर्तिनां प्रकाशकणसदृशाणां ताराणां स्थूलदण्डाकृतिरिव दृश्यते, अस्या मध्यभागे प्रायशो गोलाकृतयस्तारागुच्छाः सन्ति। अत्र चाकाशान्तर्दृश्यानां रजःकणानां गैसकणानां चाभावः, अस्या बाह्यभुजेष्वाकाशगङ्गीयास्तारागुच्छाः सन्ति, ये गोलाकृतिगुच्छानामपेक्षया नूतनतराः। तत्रैव च तारादिपिण्डानां जन्मकारणानां गैसरजसोः कणानां बाहुल्यं दृश्यते। निर्मलाकाशे यत्र तत्रास्पष्टाकृतयः प्रकाशस्य बृहत्कणा दृश्यन्ते, दूरदर्शकयन्त्रेण विलोक्यमानास्ते त्रिविधान् पदार्थान् प्रकटयन्ति, ये तारागुच्छाः, नीहारिका,

आकाशगङ्गाश्च सन्ति। तारागुच्छेष्वेकत्र सञ्चयीभूताः सहस्रशस्तारका दृश्यन्ते ये स्वीयाकर्षणकेन्द्रस्याभितः परिभ्रमन्ति। अनयोर्भेदद्वयमाकाशगङ्गीयास्तारकगुच्छा गोलाकृतयश्च तारागुच्छाः। इमेऽस्माकमाकाशगङ्गायाः सदस्याः। नीहारिकास्तावत् कणानां गैसकणानां च मेघरूपा येभ्यस्तारापद्धतीनां जन्म जायते, एषु ये प्रत्यासन्नैरतिप्रकाशितैस्तारकैः प्रकाशितास्ते प्रकाशिता दृश्यन्ते, अन्येषां च यत्र तत्र प्रकाशावरोधकत्वेन ज्ञानं जायते। स्वर्गङ्गा अस्माकमाकाशगङ्गासदृश्यः सन्ति। एतासामध्ययनेनेदं ज्ञातमिदानीं यत्ता अपि सर्पिलगोलदीर्घवृत्ताकृतयः सन्ति। एतासां तारकास्तु अतिविशालैः दूरदर्शकयन्त्रैरेव द्रष्टुं शक्यन्ते। एतासां संख्या या इदानीं यावद् ज्ञाताऽस्ति सा प्रायशः अर्बुदसमा। वैज्ञानिकानां विश्वासो यदेतासां संख्या ततोऽप्यधिका भविष्यति, परं बृहत्तराणां दूरदर्शकयन्त्राणामभावेन ता द्रष्टुं न शक्यन्ते। इदमस्माकं विश्वस्य दृश्यं स्वरूपम्।

ताराद़ीनां दूरत्वम्—दूरवर्तिनां पदार्थानां दूरत्वस्य तारतम्यं लम्बनवशाद् ज्ञायते। लम्बनं नाम कस्यचित् पदार्थस्य स्थानभेदेन दर्शनात् स्थानान्तरे दर्शनम्। तारका अस्माकं सकाशादतिदूरे स्थिताः अत एव कयोश्चिदपि प्रदेशद्वययोर्दर्शनात्ते तस्यामेव दिशि दृश्यन्ते। अतो वैज्ञानिकैर्विशालो भुवः कक्षव्यास एव आधाररूपेण गृह्यते, यदि काचित् तारा षण्मासान्तरालेन विध्यते, तदा तदर्थं भूकक्षाव्यास आधारतां याति, एवं कृतेऽपि अतीवासन्नताराणां लम्बनमेकविकलातो न्यूनं वर्तते। यस्य तारकस्य लम्बनमेकविकलातुल्यं वर्तते तस्य दौर्यं विकललम्बनं पारसेकं वा भवति। एकं पारसेकं १९,२००,०००,०००,००० माइलतुल्यं वर्तते। यद्यप्यस्यैककस्य प्रयोगो ज्यौतिःशास्त्रे प्रायेण भवति, तथाप्यन्यदप्येकमैककं वर्तते दौर्यसूचकम्। तस्य प्रकाशवर्षसंज्ञा। प्रकाशः प्रतिसेकेण्डं १८६००० माइलतुल्यं गच्छति। एकस्मिन् सौरवर्षे तथैव गत्या गच्छन् प्रकाशो यद्दौर्यमतिक्रामति तदेव दौर्यं प्रकाशवर्षसंज्ञं वर्तते। माइलमानेनास्य मानं ५,८८०,०००,०००,००० तुल्यं वर्तते। अस्माकमत्यासन्नः तारकः किन्नरतारामण्डले ( Proxima Centauri ) वर्तते। एवं त्रिकोणमितिरीत्या केवलमतिपार्श्ववर्तिनामेव तारकाणां दौर्यं ज्ञातुं शक्यते, अन्येषां तु निरपेक्षकान्तिमानस्य ज्ञानेन तज्ज्ञायते। यदि सर्वेऽपि तारका दशपारसेकतुल्यदौर्ये स्थापिता स्युस्तदा तेषां दृश्यकान्तिमानं निरपेक्षं कान्तिमानं भवति। ताराणां दृश्यकान्तिमानस्य निरपेक्षकान्तिमानस्य च ज्ञानेन गणितद्वारा तेषां दौर्यं ज्ञातुं शक्यते।

( तत्र सूत्रम्—निरपेक्षकान्तिमानम् = दृश्यकान्तिमानम् +५—५ लघु दौर्यम् , लघु=लघुगणकः, दौर्यं पारसेकेषु वर्तते )

तत्र निरपेक्षकान्तिमानस्य ज्ञानं फोटोविद्युत्कान्तिमापकयन्त्रैः क्रियते, अतिदूरस्थितानामाकाशगङ्गानां च दूरत्वज्ञानं कपिशतारामण्डलस्य ( Cepheus ) चतुर्थतारागुणैः सिफीडाख्यैस्तारकैः क्रियते। इमे आवर्तनकालकान्तिवृद्धिनियमं ( Priod luminousity relationship ) अनुसरन्ति, अत एतेषां निरपेक्षकान्तिमानं ज्ञातुं सुशकम्। एवमेव वीणातारामण्डलस्य ( Lyra ) आर. आर. लाइराख्यानां तारकाणां साहाय्येनापि ताराणामाकाशगङ्गानां च दौर्यं ज्ञायते। एतेषां निरपेक्षमानं शून्यसमं भवति। एवं रीत्यास्माभिस्तारकानां दौर्यस्य ज्ञानं कृतम्। वर्णविश्लेषकयन्त्रैः 'स्पेट्रोग्राफाख्यैः' अपि तारकाणां दौर्यं ज्ञायते। एवमस्माभिर्माउण्टपालोमारस्थितेन बृहत्तमेन दूरदर्शकयन्त्रेण ( १,०००,०००,००० ) अर्बुदपारसेकतुल्यदौर्ये स्थितानां ताराणां स्वर्गङ्गानां च वेधः कृतः, माइलेष्वस्य दौर्यस्य मानं २×१०²² वर्तते।

ताराणां व्यासा द्रव्यमात्रा च—दृश्यतारकेष्वधिकतरा युग्मतारा बहुलतारा वा सन्ति, तत्र युग्मतारासु ग्रहणकारियुग्मतारा तारकाणां व्यासस्य ज्ञानाय साहाय्यं करोति। युग्मतारायामेकापरं परितो न्यूटनमहोदयस्य व्यापकगुरुत्वनियमानुसारं परिभ्रमति। ग्रहणस्यावृत्तिकालस्य ज्ञानेन प्रकाशस्य ह्रासवृद्धयोरावृत्त्या च गणितस्य साहाय्येन तेषां व्यासा वेगाश्च ज्ञायन्ते, ततश्च न्यूटनस्य व्यापकगुरुत्वनियमेन तेषां तद्वेगकारिद्रव्यमात्रापि ज्ञायते। तारकस्य घनफलेन द्रव्यमात्रां विभज्य तेषां सापेक्षं घनत्वं लभ्यते। एवं रीत्या तारकाणां व्यासानुसारं तेषां दानवाकारवामनाकारादिसंज्ञा कृता वर्तते। अतिदानवाकृतेर्ज्येष्ठातारकस्य व्यासः सूर्यस्य व्यासापेक्षया ४८० गुणः, तस्य द्रव्यमात्रा च सूर्यद्रव्यमात्रायाः ३० गुणः वर्तते। तस्य घनत्वं चातीव स्वल्पम्। क्षुद्रवामनाख्यताराणां व्यासः सूर्यव्यासापेक्षयातीव स्वल्पो वर्तते। तेषां घनत्वं च सूर्यापेक्षया सहस्रगुणं लक्षगुणं च भवति, तेषां द्रव्यमात्रया पूर्णा दीपशलाक्यपेटिका 'टन' भारतोऽप्यधिका भविष्यति, यां शङ्करस्य धनुरिव सतीं रामसदृशः कश्चिदवतारिपुरुष एव कदाचिदुद्धरेत्। अस्मिन् तारासमवायेऽस्माकं सूर्यः सामान्यस्तारको वर्तते।

ताराणां तापमानम्—वर्णविश्लेषकयन्त्रेण, वर्णशोधकोपायेन गृहीतैः फोटोचित्रैश्च ग्रहाणां वर्णो ज्ञायते। वर्णो हि तेषां पृष्ठतापसूचकः। वर्णभेददृष्ट्या ओ०, बी०,

इत्यादयस्तारकाणां नवभेदाः स्वीकृताः सन्ति। तत्र ओसंज्ञानां ताराणां पृष्ठतापमानम् ५०,०००°—१०,००००° मितं वर्तते, तत्र सूर्यस्य पृष्ठीयं तापमानं ६,०००° तुल्यं वर्तते। न्यूनतमं पृष्ठीयं तापमानं २०००° तुल्यं वर्तते, ताराणां गर्भीयं तापमानं तु २०,०००,०००° ( द्विकोट्यंशतुल्यं ) भवति। एतादृशं तापमानं बृहतामणुवमानां विस्फोटकाले क्षणमात्रमेवोपलभ्यते।

ताराणां वेगाः—तारासु द्विविधो वेगो भवति। अतिदूरस्थानां प्रायशः स्थिराणां ताराणां सापेक्षं कोणीयं स्थानान्तरणं, दृष्टिसूत्रदिशि च। अत्र प्रथमस्य निजा गतिरिति संज्ञाऽपरस्य च त्रैज्यवेग इति। तत्र निजा गतिः स्वल्पा भवति, सा च बहुकालान्तरेण गृहीतानां फोटोचित्राणां तुलनया ज्ञायते, त्रैज्यवेगस्तु डापलरनियमेन। अस्माकं स्वाभिमुखमागच्छतः पदार्थस्य ध्वनिः समेऽपि दूरत्वेऽस्माकं सकाशाद् विरुद्धदिशि गच्छतस्तस्यैव पदार्थस्य ध्वनेरपेक्षया तीव्रतरा भवति। एवमेव वर्णचित्रे (स्पेक्ट्रमाख्ये) अस्मदभिमुखमागच्छतां ताराणां वर्णरेखा वर्णपटस्य नीलवर्णदिशि भवन्ति, दूरं गच्छतश्च रक्तवर्णदिशि भवन्ति। रेखानामपसारस्तु दूरत्वानुपाती भवति। एवमस्माभी रेखानां रक्तवर्णदिश्यपसरणानामध्ययनेन दूरस्थाकाशगङ्गानां त्रैज्यवेगा ज्ञाताः सन्ति, येष्वधिकतम इदानीं यावद् ४०,००० माईलानि प्रतिसेकेण्डं वर्तते। निजगतेस्त्रैज्यवेगस्य च लब्धवेगस्यैव तारकस्य वास्तविको वेगो भवति।

तारकाणां मूलतत्त्वानि—तारकास्तु निजाकर्षणबलेन संघटितस्य गैसमयस्य पदार्थस्य समूहरूपाः। एषु येषां तारकाणां द्रव्यवितरणं सूर्यसदृशं वर्तते, येषां चास्माकं तारापद्धतावाधिक्यं वर्तते, ते मुख्यानुक्रमीया( Main Siquence )स्तारका भवन्ति। तेषु हाइड्रोजनाख्यस्य गैसपदार्थस्य मात्रा ५०%तः ७०%तुल्या। गुरुभारवतां मूलतत्त्वानां मात्रा १% तोऽपि न्यूना वर्तते। नूतनेष्वियं मात्रा कुत्रचित् ३% तुल्यापि लभ्यते, शेषं द्रव्यं हीलियमाख्यगैसरूपं वर्तते। तत्रेमां विभिन्नतां दृष्ट्वा वैज्ञानिकैः प्रतिपादितमस्ति यत् सृष्ट्यादौ तु प्रायशो द्रव्यं हाइड्रोजनाख्यमेवासीत्, स्वल्पमन्यदपि लघुभरं हीलियमाख्यं द्रव्यमासीत्। गुरुद्रव्याणां निर्माणं तु तारकाणां निर्माणानन्तरं तत्रत्यनिपीडनवशाद् भवति। नोवाख्या नवतारका ये द्रव्यस्य भृशं संकोचाद् विस्फोटकारणेन स्वल्पकालायातिप्रकाशवन्तो भवन्ति, तेषां संकोचनावसरे तत्रत्योत्पीडनस्य तापमानस्य चानुकूलतया गुरूणां तत्त्वानां लौहादीनां जन्म जायते।

ते च विस्फोटेन तद्गुरुद्रव्यं विश्वे प्रसारयन्ति, अत एव येषां तारकाणां जन्मापेक्षा-कृतमर्वाचीनं वर्तते, तेषु गुरुतत्त्वानां बाहुल्यं वर्तते।

ऊर्जास्रोतांसि—तारका स्वीयेनैव प्रकाशेन प्रकाशिताः सन्ति। ते च लक्षसंख्येषु कोटिसंख्यकेषु च प्रकाशवर्षाणां दौर्येषु स्थिता अप्येतावन्तं प्रकाशं विकिरन्ति यत्तेषां प्रकाशोऽस्माभिर्द्रष्टुं शक्यते। तेषां च पृष्ठीयं तापमानमपि सहस्रेष्वंशेषु माप्यते। एतावतीमूर्जां ते कथं जनयन्ति ? वैज्ञानिकैर्निर्णीतमिदानीं यद् जन्मकाले तारकः स्वसंकोचनेनैव स्वकेन्द्रे तापं जनयति, यदा तस्य केन्द्रीयं तापमानं सूर्यस्य केन्द्रिय-तापमानतुल्यं जायते, तदा तस्याभ्यन्तरेऽणूनां प्रतिक्रिया आरभते, तया प्रतिक्रियया तेषां हाइड्रोजनाख्यं तत्त्वं हीलियमतत्त्वे परिणमति। एतेन परिणमनेन तारकाः प्रभूततरा-मूर्जां लभन्ते। तेन च तेषां द्रव्यमात्राया अपि महती हानिर्न जायते। तारकेषु हाइड्रोजनतत्त्वस्यातिबाहुल्यात्ते तस्योपभोगेन बहुकालं यावत् स्वीयं प्रकाशमयं जीवनं धारयितुं समर्थाः। तारकेषु या आणविका प्रतिक्रिया भवति सा कार्बन-साइकलाख्या प्रोटोन-प्रोटोनरियेक्शनाख्या च वर्तते। उभयत्र प्रक्रियासु ते स्वीयस्य हाइड्रोजनभण्डारस्यैवोपभोगं कुर्वन्ति। तारकाणां हाइड्रोजनोपभोगः स्वद्रव्यमात्राया घनस्यानुपाती प्रायो दृश्यते। एतेनैतज्ज्ञायते यद् येऽतिप्रकाशवन्तस्तारकास्ते स्वीयस्य हाइड्रोजनतत्त्वस्यातितरामुपभोगं कुर्वन्ति। अत एव तेषां जीवनपरिधिरपेक्षातः स्वल्पः।

विश्वस्य वर्तमानमायुष्यम्—वैज्ञानिकैर्बहुभिः प्रकारैर्विश्वस्यायुष्यं निर्धार्यते। तत्र सर्वप्रथमं भुव आयुष्यनिर्धारणं भौतिकीविद्भिः 'यूरेनियम्'नामकधातोः समीपे समुपलभ्यमानेन 'लेड'नामकेन धातुना कृतम्। यूरेनियमनामकस्य धातोरणुषु विस्फोटो भवति तेन च ते 'लेड' धातोरणुषु परिणता भवन्ति। वर्तमाना यां भुवि समुपलभ्यस्य 'लेड'धातोर्मात्रया तस्याः 'यूरेनियम' धातोः सकाशात् परिणति-कालेन तुलनां कृत्वा तैर्भुव आयुष्यं त्र्यर्बुदवर्षाणि यावन्निर्धार्यते। एवमेव समुद्रस्य सागरेषु समुपलभ्यमानां लवणस्य मात्रां विलोक्यापि तैरेतादृशमेव प्रायः फलं लब्धम्। चन्द्रस्य जन्म भुव एटलाण्टिकसागराख्यप्रदेशाज्जात इति दैवज्ञानां मतम्। तस्य भुवा सहाकर्षणजनितेन घर्षणेन तत्र जातानां ज्वारभाटाख्यानां बलानां घर्षणेन चन्द्रः शनैः शनैर्भुवः सकाशादपसरति। तस्य मात्रापि वैज्ञानिकैर्ज्ञाता। चन्द्रस्यैकवर्षस्यापसरणगत्या चन्द्रस्य वर्तमानं दूरत्वं विभज्य त्रैराशिकेन या वर्षसंख्या लभ्यते, सापि भूभौतिकीविदां परिणामं पोषयति। अथ च हाइड्रोजनस्योपभोगेनाऽपि

गणकैर्वर्तमानावस्थायां विभिन्नासु स्थितिषु वर्तमानानां तारकाणां हाइड्रोजनभण्डारं ज्ञात्वा तेषामायुष्यनिर्णयः कृतः, यथा सूर्ये ५०% हाइड्रोजनाख्यो धातुर्वर्तते, तेन ६% प्रतिशतस्य तस्योपभोगः कृतः। तस्य हाइड्रोजनमात्रा $१०^{२७}$ टनमिता आसीत्। सूर्यश्च प्रतिसेकेण्डं $८\times१०^{८}$ टनमितं हाइड्रोजनं स्वतापोत्पादनाय भुनक्ति। एवं सूर्यस्य समग्रमायुष्यं $=\frac{१०^{२७}}{८\times१०^{८}}=१.४\times१०^{१८}$ सेकेण्ड $=५\times१०^{१०}$ वर्षाणि। सूर्येण च ६ प्रतिशतस्यैव तस्योपभोगः कृत इति तस्यायुष्यं त्र्यर्बुदवर्षाणि वर्तते। एवमेवान्येषामपि ताराणामायुष्यं ज्ञातमस्ति। यस्य मानं ३ अर्बुदवर्षाण्यायाति। आकाशगङ्गीयतारागुच्छानामध्ययनेन ज्ञायते यद् यया रीत्या ते मिथ एकस्यामेव दिशि चलन्तः स्वीयां गुच्छाकृतिं धारयन्ति। तथाविधामाकृतिं ते एकार्बुदमारभ्य एकाब्जवर्षपर्यन्तं धारयितुं क्षमाः। तेषां वर्तमानामवस्थामवलोक्य तेषामायुष्यमर्बुदत्रयासन्नं समायाति। एवमेवाकाशगङ्गानामध्ययनेनापि स एवार्थो लभ्यते। हबलमहोदयेन डापलरमहोदयस्य सिद्धान्तेनाकाशगङ्गानां वर्णक्रमचित्रीयरेखानां रक्तवर्णदिशि स्थानान्तरणानामध्ययनेनापि ज्ञायते यद् विश्वं प्रसरमानं वर्तते, अर्थात्तस्य अध्ययनैरिदं प्रतिफलति यद् दूरवर्तिन्य आकाशगङ्गाः स्वदूरत्वानुपातिन्या स्थिरया गत्याऽस्माकं सकाशादपसरन्ति। एवमेककोटिपारसेकदौर्ये स्थिता आकाशगङ्गा अस्माकं सकाशात् प्रतिसेकेण्डं १००० माईलतुल्यमपसरति। पञ्चार्बुदपारसेके च स्थिता ५०,००० माईलतुल्यमपसरति। एतेन हबलमहोदयेन एकः सिद्धान्तः प्रतिपादितः। यदेवम्—

अपसरणवेगः $=$ स्थिराङ्कः $\times$ दूरत्वम्।

एतेषां सर्वेषामायुष्यनिर्णयानामध्ययेनैतदेव प्रतिफलति यदेकस्मिन् निश्चिते काले विश्वस्योत्पत्तिरभूत्।

**विश्वस्योत्पत्तिसिद्धान्तः**—गेमोमहोदयेन प्रतिपादितं यद् विश्वस्योत्पत्तिकाले विश्वस्य सर्वस्य द्रव्यजनकपदार्थस्य एकत्र बृहद्द्रव्यपिण्डरूपेण स्थितिरासीत्। गेमोमहोदय इमं पदार्थगोलं 'ईलम' शब्देनाभिधत्ते। तस्य पदार्थगोलस्यातीव घनत्वात् तत्रत्यविद्युत्कणादीनां चात्यन्तं निपीडनतया विचित्रायामवस्थायां विद्यमानत्वाच्च तदा तदुत्पीडनजनितं विश्वस्य तापमानं च विंशतिकोट्यंशतुल्यमासीत्। तस्य पदार्थस्या-

त्यन्तमुत्पीडनेन जातेन विस्फोटेन तस्य पदार्थविशेषस्य चतुर्दिक्षु प्रसरणं प्रारभत। यथा यथायं पदार्थः प्रसृतवान् तथा तथा विश्वस्य तापमाने न्यूनता जाता। ततस्तदादिविश्वप्रसरणस्थितेरारभ्य २५ कोटिवर्षाणि पश्चाद् विश्वस्य तापमानं तथाविधमभवद् यथाणूनां जन्म संभवमासीत्। तदा च प्रोटोन-इलेक्ट्रोन-न्यूट्रोन-प्रभृतीनां परस्परं समन्वयेन विभिन्नानां द्रव्याणूनां जन्माभूत्। तदनन्तरं विश्वस्य सर्वमपि द्रव्यं बृहदाकृतिषु गोलेषु विभक्तं जातम्। तदैव च गुरुत्वाकर्षणक्षेत्राणां जन्म जातम्। ते च गैसमेघा स्वीयान्याकर्षणक्षेत्राण्युत्पाद्य प्रसरणगत्या कालान्तरे आकाशगङ्गारूपान् धारयामासुः। तन्मध्ये वर्तमानानामणूनां च विक्षोभवशाद् बृहदाकृतिमेघेषु लघ्वाकृतीनां कोटिशः स्वल्पमेघानां जन्माभूत्, ये च कालान्तरे स्वर्गङ्गासु दृश्यमानास्तारका बभूवुः। विश्वस्य निर्माणस्येयमवस्थाऽर्द्धहोरां यावदेव प्रचलिता। नेदं विस्मयकारणम्, यतोऽमेरिकादेशस्य नेवाडानामके स्थाने यत्र प्रथमस्याणुबमस्य विस्फोटोऽभूत्, तत्र तस्योष्णताप्रभावो वर्षत्रयं पश्चादपि लक्षितोऽभूत्। अयं विस्फोट एकसेकेण्डस्य लक्षतमभागावध्येवासीत्। तत्र स्वर्गङ्गानां द्रव्यमात्रावशेन तेषां स्वाक्षपरितो जातस्य भ्रमणवेगस्य न्यूनाधिक्येन कासाञ्चित् स्वर्गङ्गानामाकृति-र्गोलीया, कासाञ्चिद् दीर्घवृत्ताकारा, अन्यासां च सर्पिलाकारा जाता। केषाञ्चिद् वैज्ञानिकानां मतमिदं यदादौ सर्वा अपि स्वर्गङ्गाः सर्पिलाकारा भवन्ति। तासां च स्वाक्षं प्रति परिभ्रमणगतीनामतिविशालत्वात् कालान्तरे ताः स्वीयान् भुजान् विनाश्य गोलाकृतयो दीर्घवृत्ताकृतयो वा भवन्ति। आदौ तारका अपि मुख्यक्रमे जन्म गृह्णन्ति, विशालानां दानवाकृतितारकाणां विषये केषाञ्चिद् वैज्ञानिकानां मतमिदं यत्ते आदौ सामान्याकृतयो भवन्ति पश्चात्ते स्वर्गङ्गाया भुजेषु वर्तमानं द्रव्यं स्वाकर्षणक्षेत्रवशादाकृष्य पृथुला जायन्ते। अन्ये च वैज्ञानिकास्तेषां जन्मापेक्षाकृतं नूतनं मन्यन्ते। तेषामयमाशयो यत्ते तादृशं प्रकाशवन्तं जीवनं बहुकालं यावद् धारयितुमसमर्थाः। तेषां च यौवनावस्थां विलोक्येदमेवानुभूयते यत्तेषां जन्मापेक्षा-कृतमर्वाचीनं वर्तते। विश्वस्योत्पत्तेरेतत् सिद्धान्तानुसारं विश्वस्यादिर्वर्तते। अयं च तस्योत्पत्तिकालः। सा चोत्पत्तिर्वर्तमानकालात् त्र्यर्बुदवर्षाणि पूर्वं जाता। तस्मिन् सिद्धान्ते ताराणां विश्वस्य च समग्रमायुष्यमपि निर्धारितं वर्तते। प्रायशः स्वर्गङ्गानां ताराणां स्वहाइड्रोजनद्रव्यस्योपभोगेन प्रकाशकारित्वमेकाब्जवर्षतुल्यं वर्तते। तस्य कालस्याग्रे सर्वमपि विश्वं प्रकाशरहितं मृतमिव भवष्यति। स एव प्रलयः।

होयलमहोदयैरेतत् प्रतिपादितं यद् यद्यपि एकार्बुदतुल्ये काले विश्वस्य वर्तमानाः स्वर्गङ्गास्तासां तारकाश्च नष्टा भवन्ति, तथापि विश्वे प्रतिक्षणं द्रव्यस्योत्पद्यमानत्वा-दन्यासां च स्वर्गङ्गादीनां जननस्य प्रक्रिया सर्वदा प्रचलति। अनया रीत्या विश्वमिदमनाद्यनन्तं च।

ताराजगतो विकासक्रमः—स्वजन्मकाले द्रव्यमात्राभिन्नत्वेऽपि सर्वेऽपि तारकाः सूर्यसदृशं मुख्यक्रमस्य सदस्या भवन्ति। प्रथमं तारकः संकोचेन स्वकेन्द्रे तापमानं जनयति। तापक्रमस्यास्य शनैः शनैर्वृद्ध्यै तस्य केन्द्रे आणविका प्रतिक्रिया आरभते, येन स स्वीयं हाइड्रोजनतत्त्वं हीलियमतत्त्वे परिणाम्य स्वप्रकाशेन प्रकाशितो जायते। प्रथमं स स्वहाइड्रोजनतत्त्वं शनैः शनैर्भुनक्ति पश्चाच्च बहुमात्रायां हाइड्रोजनोपभोगेन तस्योष्मा वर्द्धते येन तस्य स्वरूपस्यापि विस्तारो भवति। ततश्च तस्य स्वरूपं दानवा-कृतिर्जायते। एवं दानवाकृतिताराणां स्वरूपस्य व्याख्या। तदन्तरं हाइड्रोजनतत्त्वं हीलियमतत्त्वे परिणमति, ततश्च तस्मिन् संकोचमारभते। संकोचवशाच्च तस्मिन् पुनस्तादृशं तापमानं जायते येन तस्य हीलियमतत्त्वमप्याणविकीं प्रतिक्रियां प्राप्नोति। तस्मिन् काले चान्तःस्थानामणूनां विक्षोभवशात् तस्य पिण्डेऽस्थैर्यं जायते। तेन च क्रमशः संकोचवृद्ध्या तारकः स्पन्दनशीलश्च भवति। अत एव सिफीडाख्यास्तारकाः स्पन्दनशीलाः सन्ति। अस्यामेव अवस्थायामन्येषामपि चलतार-काणां जन्म जायते। एवं चलतारकाणामुत्पत्तिर्जायते। ततश्च तारको हीलियमा-ख्यतत्त्वस्यापि पदार्थान्तरेषु परिणामात् किञ्चित् कालं यावत् पुनः संकोचेन स्वप्रकाशमयं जीवनं धारयति। तदा तस्मिन् पुनराणविकी प्रतिक्रिया न भवितुमर्हति। यतो हि गुरूणां तत्त्वानां विस्फोटस्य यादृशस्तापक्रमोऽपेक्ष्यते तत्र तस्मिन्न प्रादुर्भवति। एतादृशस्तारकः श्वेतवामनो भवति। श्वेतवामनत्वं तारकस्य विकासस्य चरमावस्था। केचित्तारकाः संकोचजनितेनोत्पीडनेन विस्फोटं प्राप्य क्षणिकमति-प्रकाशमयं जीवनं धारयन्ति। ते नवतारका भवन्ति। तारकाणामुत्पत्तिकाले तेषां घूर्णनगतेरत्यधिकत्वात्तेषां द्रव्यमात्रा तेषां विषुवधरातले संचिता जायते; याऽतिवेगवशाद् भ्रष्टा तारकान्तरान् जनयति। अत एव युग्मादितारकाणां विश्वे बाहुल्यं दृश्यते। अनयैव रीत्यास्माकं सौरपरिवारस्य सदस्यानां जन्म जातं वर्तेत इति केषाञ्चिद् वैज्ञानिकानां मतम्। तत्रोपग्रहास्तु भौमगुर्वोर्मध्ये वर्तमानग्रहस्य विस्फोटकारणाज्जाताः। उल्कास्तु नवताराणां विस्फोटानां द्रव्यं यद्रविना स्वाकर्षणेनाकृष्टम्। धूमकेतवस्त्वा-

काशान्तर्वर्तिनो रजसो गैसस्य कणानां च सूर्येणाकृष्टानां समवायेन जाताः। धूमकेतवोऽपि स्वविघटनेनोल्का जनयन्ति।

विश्वस्य वक्रता विश्वस्य व्यासश्च। तत्र देशविशेषस्य क्षेत्राणि त्रिविधानि भवन्ति—समतलानि, ऋणवक्राणि, धनवक्राणि च। समतलेषु जाते त्रिभुजक्षेत्रे कोणत्रययोगः समकोणद्वयतुल्यो भवति। धनवक्रेषु समकोणद्वयाधिकः, ऋणवक्रेषु च समकोणद्वयान्न्यूनो भवति। अस्य निर्णयार्थं सामान्यसापेक्षसिद्धान्तगणितस्य समीकरणेषु वेधोपलब्धां विश्वस्य द्रव्यमात्रां गृहीत्वा क्षेत्राणां स्थितिर्निर्णीयते। आइन्स्टाइनमहोदयेन स्वसामान्यसापेक्षसिद्धान्ते सम्यक् प्रतिपादितं यद् विश्वमिदं वक्रं वर्तते। तस्य वक्रता तैर्धनात्मिका स्वीकृता। एवं विश्वस्याकृतिर्गोलाकारा जायते। एतादृशं विश्वं तैः स्थिरं कल्पितम्। अन्यैश्च लेमित्रेप्रभृतिभिर्विश्वस्य स्वर्गङ्गानामस्माकं सकाशादपसारणं विलोक्य प्रसार्यमाणं विश्वं च विलोक्यास्य विश्वस्य वक्रता ऋणात्मिका स्वीकृता। एवं कल्पिते विश्वमनन्तं भविष्यति, स्वर्गङ्गाश्च क्रमशोऽनन्ते देशे लीना भविष्यन्ति। अस्य निर्णयार्थमस्माभिर्वर्तमानविश्वाकर्षणक्षेत्रस्य स्वर्गङ्गानामपसारणवेगैस्तुलना क्रियते। यथा यस्य राकेटस्य वेगो भुव आकर्षणवशाज्जातात् प्रतिरोधनबलादधिकः, स एव भुव आकर्षणपरिधिं भेत्तुं शक्नोति; तथैव यस्याः स्वर्गङ्गाया अपसारणवेगो विश्वस्य वर्तमानद्रव्याधारिताकर्षणक्षेत्रवशाज्जातात् प्रतिरोधबलाधिकः, सैवाकाशगङ्गा विश्वस्याकर्षणपरिधिं छित्त्वा तस्माद् बहिर्गन्तुं शक्नोति। इदानीं स्वर्गङ्गानां ये वेगा लभ्यन्ते नूनं तैर्वेगैरिमाः स्वर्गङ्गा अनन्ते आकाशे निलीना भविष्यन्ति। इयमेव स्थितिस्तासां वक्रतामृणात्मिकां विश्वं चानन्तं करोति। अस्यां स्थितौ तु विश्वस्य विस्तारप्रक्रिया कदाचिदपि समाप्तिं नैव यास्यति। परमियं कल्पना स्वर्गङ्गासु विद्यमानमेव द्रव्यसमूहं निखिलं द्रव्यं मत्वा प्रतिफलति। अतो यदि विश्वे क्षुद्रदृढपिण्डान्यपि स्युर्येषां द्रव्यमात्रा पर्याप्तं प्रभावोत्पादिका भवेत् तदा आकाशगङ्गानां वेग एवंविधो न स्थास्यति यद् विश्वस्य गुरुत्वाकर्षणक्षेत्रात् ता बहिर्गन्तुं पारयेयुः, तस्यां दशायां विश्वस्य वक्रता धनात्मिकैव स्थास्यति, विश्वं च सान्तं भविष्यति। गणितस्य समीकरणेषु स्वर्गङ्गानां गतिपरिवर्तनेन, विश्वस्य द्रव्यमात्रामानस्य च परिवर्तनेन तस्य स्वरूपं स्पन्दनशीलं लभ्यते। अस्यायमर्थो यद् विश्वस्य द्रव्यमादिविस्फोटानन्तरं प्रसारं याति। तस्य प्रसारेण विश्वे उष्णता, तस्य घनत्वं च क्रमशो ह्रासं यातः, एकां सीमां च प्राप्य घनत्वस्य ह्रासे निरोधो जायते,

विश्वे च सङ्कोचमारभते। एवं सङ्कुच्यमाने विश्वे सर्वमपि द्रव्यमेकत्र संचितं भवति। तस्य घनत्वं च यदा जलस्य घनत्वापेक्षया ( $१०^{१४}$ ) शङ्कुगुणं जायते, तदा पुनस्तस्य विस्तार आरभते। एवमावृत्त्या विश्वस्योत्पत्तिविनाशौ च सततं प्रचलतः। अस्माकं दृश्यसाधनानां दूरदर्शकादियन्त्रक्षेत्राणां च ससीमत्वादिदानीं यावद् विश्वस्य वक्रतायास्त्रिज्यायास्तस्य विस्तारस्य च सम्यग् ज्ञानं नास्ति। परं वैज्ञानिकैः स्वाध्यवसायो न त्यक्तः, तैरद्यत्वे रेडियोदूरदर्शकयन्त्राणामाविष्कारः कृतो येनातिदूर-वर्तिनामपि खगोलीयपिण्डानां ज्ञानं भवितुमर्हति। अद्यत्वे चास्माकं गुरुवर्याणां प्रोफेसर-वी०वी०नारलीकरमहोदयानां सुतस्य डा०जयन्तनारलीकरमहोदयस्य सहयोगेन श्रीहोयलमहोदयेन गुरुत्वाकर्षणविषये नूतनस्य सिद्धान्तस्याविष्कारः कृतः। यदनुसारं विश्वे द्रव्यमात्राया ह्रासवृद्ध्या विश्वस्य गुरुत्वेऽन्तरमायाति। यदि विश्वस्य स्वर्गङ्गा अस्माकं सकाशाद् अपचीयमाना अनन्ते लीना भवन्ति, तर्हि अस्माकं दृश्यविश्वे नूनं द्रव्यमात्राया ह्रासो भविष्यति। अतस्ताभ्यां विश्वे प्रतिक्षणं द्रव्योत्पत्तिसिद्धान्तं स्वीकृत्यानन्ते विलीयमानानामाकाशगङ्गानां द्रव्यस्य तेन च पुनराकाशगङ्गादीनां जन्म स्वीकृत्य स्थायिविश्वसिद्धान्तस्य ( Steady State of univrse ) समर्थनं कृतमस्ति। यद्ययं सिद्धान्तो वेधोपलब्धैः फलैः परीक्षितः सत्यतां यास्यति, तदा विश्वस्य स्वरूपादिविषयेऽस्माकं विचारेष्वपि तस्य प्रभावो भविष्यति।

अत्र यद्यपि सर्वोऽपि विचारो नूतनवैज्ञानिकरीत्या कृतः, तथापि प्रसङ्गवशाद् भारतीयानां विश्वोत्पत्तिविषये किञ्चिदुच्यते। भारतीयैः कल्पाख्यस्य ब्रह्मदिनस्यारम्भे विश्वोत्पत्तिः स्वीक्रियते। तदैव ब्रह्मा सर्वं ग्रहनक्षत्रादिजगत् सृजति। ब्रह्मदिनान्ते च तस्य लयः, पुनर्दिनादौ तस्योत्पत्तिः, पुनश्च दिनान्ते लय इति याऽस्माकं प्राचीना कल्पनासीत्, तदनुसारिण्याधुनिकानां स्पन्दनशीलस्य विश्वस्य कल्पना। तत्र नवीनै-र्विश्वस्य संपूर्णं यदायुष्यं निर्धारितं तस्य वर्षाणां च संख्याऽपि कल्पवर्षसंख्यया नाति-भिन्ना। यद्यपि कल्पवर्षाणां संख्या किञ्चिन्न्यूना वर्तते, तस्मिन् वर्षसमूहे वर्तमान-वैज्ञानिकरीत्या विचारे क्रियमाणेऽपि भुवि जीवनस्यान्तो भविष्यति। बहवश्च तारकाः प्रकाशरहिता मृता भविष्यन्ति, दूरवर्तिनां तारकाणां निजगत्यापसरणाद्राशीनां तारामण्डलानां च स्वरूपे परिवर्तनम्, आकाशगङ्गाया भुजानां विनाशेन तस्य स्वरूपे परिवर्तनम्, तारागुच्छानां च गुच्छत्वविनाशो भविष्यति। मानवसृष्टेस्तु सर्वथा

विनाशो भविष्यति। विश्वेऽपि महत् परिवर्तनं भविष्यति। अस्माकं दृष्टया स वास्तविकः प्रलय एव। एवमेव यदिदानीन्तने काले पिहितस्य गोलाकृतेर्विश्वस्य कल्पना दृश्यते, सापि न नवीना, तादृशी कल्पना सिद्धान्तशिरोमणौ श्रीमता भास्कराचार्येण ब्रह्माण्डकक्षया कृता। यथोक्तं तैर्मध्यमाधिकारस्य कक्षाध्याये—

> कोटिघ्नैर्नखनन्दषट्कनखभूद्भुजङ्गेन्दुभिः (१८७१२०६९२०००००००)
> ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः।
> तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनं
> केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः॥

यद्यपि नभसः कक्षाया व्यास आइन्स्टाइनप्रतिपादिताद् व्यासात् किञ्चिन्न्यूनः, तथापि यदि विश्वस्य प्रसारणसिद्धान्तोऽस्माभिः स्वीक्रियते, तदा विश्वस्य प्रसारणावस्थाया वर्तमानकालान्नातिदूरवर्तिनि काले ब्रह्माण्डस्य व्यासस्तत्तुल्य एव संभाव्यते, तदैव चास्माकमृषिभिरस्य ज्ञानं कृतं भविष्यतीत्यनुमीयते। एवमेव विश्वस्य वर्तमानमायुष्यं यद् भास्कराचार्यैः कालमानाध्याये—

> याता षण्मनवो युगानि भमितान्यन्यद् युगाङ्घ्रित्रयं
> नन्दाद्रीन्दुगुणाः (३१७९) तथा शकनृपस्यान्ते कलेर्वत्सराः।
> गोऽद्रीन्द्वद्रिशशाङ्कदस्रनगगो चन्द्राः (१९७२९४७१७९) शकाब्दान्विताः
> सर्वे सङ्कलिताः पितामहदिने स्युर्वर्तमाने गताः॥

इति श्लोके प्रतिपादितम्। तदर्बुदद्वयासन्नम्। वर्तमानवैज्ञानिकानां तस्यार्बुदत्रयासन्नं निर्धारणमपि तादृशमेव वर्तते। एवमस्माकं विश्वोत्पत्तिविचारोऽपि वैज्ञानिकविश्वोत्पत्तिविचारसदृश एव प्रतिभाति। यद्यपि यत्र तत्र संख्यासु किञ्चिद् भेदो वर्तते, तत्र सैद्धान्तिको भेदो न प्रतिभातीति शम्॥

अस्य निबन्धस्य कृते निम्नलिखितानां ग्रन्थानां विषया गृहीताः।


1. The universe and Dr. Einstein--Lincoln B rnet
2. Mcdern Cosmologies--Hector Macpherson
3. Creation of the universe--Gearge Gamow
4. Frontiers of Astronomy--Fred Hoyd
5. सिद्धान्तशिरोमणिः—भास्कराचार्यः
6. Matter Earth &sky—George Gamow


अस्य विषयस्य विशेषज्ञानार्थं ते ग्रन्था मूलरूपेणाध्येतव्या इति।



# अभिज्ञानशाकुन्तलसमीक्षा

श्रीमहादेव उपाध्यायः वा. सं. वि. वि. साहित्याध्यापकः ।

( १९ व. ४ अ. अनुवृत्तम् )

गुणकीर्तनं यथा शाकुन्तले षष्ठेऽङ्के राजवाक्ये—राजा (विलोक्य) "अहो रूपमालेख्यगताया अपि प्रियायाः । तथा हि—

दीर्घापाङ्गविसारि नेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥

अपरञ्च तत्रैव राजवाक्यम्—

अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं
प्रेम्णा सम्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् ॥ इति ।

गुणकीर्तनलक्षणं यथा दर्पणे—

गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम् ।

लेशो यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

अत्र हि सरसिजादिसादृश्यपुरःसरं शकुन्तलाया मनोज्ञत्वबोधकवाक्यं राज्ञा प्रयुक्तमिति लेशः । लेशलक्षणं यथा दर्पणे—

स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम्।

व्याख्यातञ्च सादृश्यपुरःसरम्—सादृश्यतात्पर्यकम्। मनोरथो यथा शाकुन्तले तृतीयेऽङ्के शकुन्तला वाक्ये—"लतागृह! सन्तापहर! आमन्त्रये त्वां पुनरपि परिभोगार्थम्"। अत्र हि लतागृहव्याजेन राजानं प्रति शकुन्तलायाः स्वाभिप्रायस्योक्तिरिति मनोरथः। मनोरथलक्षणं तु दर्पणे—

मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्।

अनुक्तसिद्धिर्यथा प्रथमेऽङ्के शाकुन्तले प्रियंवदा—"त्वया समीपस्थितया लतासनाथ इवायं चूतवृक्षकः प्रतिभाति। तत्रैव राजा—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥

अत्र हि प्रियंवदावाक्ये राजवाक्ये च शकुन्तलाया रूपलावण्यातिशयज्ञापनार्थं लतात्वेन वितर्कणमित्यनुक्तसिद्धिः। तल्लक्षणं तु दर्पणे—

विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते।

प्रियवचो यथा शाकुन्तले सप्तमेऽङ्के राजवाक्ये—

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः।
निमित्तनैमित्तकयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः॥

प्रियोक्तिलक्षणं यथा दर्पणे—"स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम्"। प्रमाणयितुं प्रमाणं कर्तुं हर्षजनकं भाषणम्—हर्षभाषणम्। इति व्याख्यातं श्रीरामचरणतर्कवागीशेन।

## नाट्यालङ्काराः

अथ शाकुन्तले नाट्यालङ्काराः परीक्ष्यन्ते। ते च उक्ताः साहित्यदर्पणे—

आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः।
उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम्॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्तनम्।
उत्कीर्तनं तथा याच्ञा परिहारो निवेदनम्॥

प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ इति ।

तत्राशीर्यथा शाकुन्तले चतुर्थेऽङ्के, कण्वः—वत्से !

यथातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ इति ।

आशीर्लक्षणं यथा—"आशीरिष्टजनाशंसा" इति । आक्रन्दो यथा शाकुन्तले षष्ठेऽङ्के, राजा—( अनादृत्य ) "प्रिये ! अकारणपरित्यागाद् अनुशयदग्धहृदयस्तावद्-नुकम्प्यतामयं जनः पुनर्दर्शनेन" ।

आक्रन्दलक्षणं यथा तत्रैव—"आक्रन्दः प्रलपितं शुचा" इति । कपटं यथा शाकुन्तले षष्ठेऽङ्के—"आः ! तिष्ठ तिष्ठ कौणपापसद ! त्वमिदानीं न भवसि" अत्र हि देवसारथेः मातलेर्दैवं रूपं न विलोक्यते, किन्तु माययाऽन्यद्रूपं कौणपस्य राज्ञा विभाव्यते ज्ञायत इति कपटम् ।

कपटलक्षणं यथा—"कपटं मायया यत्र रूपमन्यद्विभाव्यते" इति ।

अक्षमा यथा शाकुन्तले पञ्चमेऽङ्के, राजा—"अहो सत्यवादिनः ! अभ्युपगतं तावदस्माभिः, एवंविधा एव वयम्, किं पुनरिमामतिसन्धाय लभ्यते । शार्ङ्गरवः—विनिपातः·······" इत्यादि ।

अक्षमालक्षणं यथा—

अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते ।

गर्वोऽपि यथा तत्रैव, राजा—"ममापि नाम सत्त्वैरभिभूयन्ते गृहाः" तल्लक्षणं यथा—"गर्वोऽवलेपजं वाक्यम्" इति ।

उद्यमो यथा शाकुन्तले षष्ठेऽङ्के, राजा—"एष तमिषुं सन्दधे—

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥

इति शस्त्रं सन्धत्ते" । अत्र इषुसन्धानस्यारम्भरूप उद्यमः । यथा च शाकुन्तले तृतीयेऽङ्के, राजा—"इदम् । ( इति व्यवसितः ) ( शकुन्तला ) वक्त्रं ढौकते । इति चुम्बनारम्भरूप उद्यमः ।

उद्यमलक्षणं यथा—"कार्यस्यारम्भ उद्यमः" इति। आश्रयो यथा शाकुन्तले षष्ठेऽङ्के मातलिः—( सस्मितम् ) "आयुष्मन्! श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः······इत्यादि। अत्र हि दुर्जयदानवगणवधरूपगुणवत्कार्यहेतोरिन्द्रस्य दुष्यन्ताश्रयणम्। आश्रयलक्षणं यथा दर्पणे—

ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते।

उत्प्रासनं यथा शाकुन्तले पञ्चमेऽङ्के, शार्ङ्गरवः—राजन्। अथ पूर्ववृत्तं व्यासङ्गाद् विस्मृतं भवेत्, तदा कथमधर्मभीरोर्दारपरित्यागः?······" इत्यादि। उत्प्रासनलक्षणं यथा दर्पणे—

उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि।

स्पृहा यथा शाकुन्तले तृतीयेऽङ्के, राजा—(अङ्गुलिभ्यां मुखमुन्नमय्यात्मगतम्)।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासितो ममानुज्ञां ददातीव प्रियाधरः॥ इति।

स्पृहालक्षणं यथा—

आकाङ्क्षारमणीयत्वाद् वस्तुनो या स्पृहा तु सा।

क्षोभो यथा शाकुन्तले पञ्चमेऽङ्के, शार्ङ्गरवः—( सासूयम् ) श्रुतं भवद्भिरधरोत्तरम्।

आजन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।
परातिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः॥

यथा च शाकुन्तले षष्ठेऽङ्के, नेपथ्ये—

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम्॥

क्षोभलक्षणं यथा—

अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु।

पश्चातापो यथा शाकुन्तले षष्ठेऽङ्के, राजा—"धिङ्मामुपनतश्रेयोऽवमानिनम्।"

पश्चात्तापलक्षणं यथा दर्पणे—

मोहादवधीरितार्थस्य पश्चात्तापः स एव तु ।

उपपत्तिर्यथा शाकुन्तले सप्तमेऽङ्के, राजा—प्रिये ।

वाष्पेण प्रतिरुद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥

अत्र पूर्ववाक्यार्थस्य सिद्धये उत्तरवाक्यार्थो हेतुतयोपन्यस्त इत्युपपत्तिः । तल्लक्षणं तु—

उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ।

आशंसा द्विविधा—स्वकृता परकृता च । स्वकृताऽपि द्विविधा सम्भवति—परोत्प्रेक्षिताऽनुत्प्रेक्षिता च । तत्र परोत्प्रेक्षिता स्वकृताऽऽशंसा यथा शाकुन्तले प्रथमेऽङ्के प्रियंवदावाक्ये, प्रियंवदा—"यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथाऽहमात्मनोऽनुरूपं वरं लभेय" इति ।

अत्र प्रियंवदयोत्प्रेक्षिता शकुन्तलाकृता आशंसा । परकृताऽपि शाकुन्तले प्रथमेऽङ्के राजानं प्रति—

पुत्रमेवं गुणोपेतं चक्रवर्तिनमाप्नुहि ।

( इतरोऽपि हस्तमुद्यम्य ) "सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि" इति सशिष्यवैखानसवाक्ये, शकुन्तलां प्रति गौतमीवाक्ये, चतुर्थेऽङ्के—

ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥

इति कण्ववाक्ये, शकुन्तलां प्रति सप्तमेऽङ्के मारीचवाक्ये च द्रष्टव्या ।

आशंसालक्षणं तु दर्पणे—"आशंसनं स्यादाशंसा" इति ।

अध्यवसायो यथा शाकुन्तले तृतीयेऽङ्के राजवाक्ये अनसूयां प्रति राजा—"भद्रे किं बहुना ।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य नः ।
समुद्ररशना चोर्वी सखी च युवयोरियम् ॥

अत्र हि शकुन्तलां प्रति कार्यस्यानन्यसाधारणस्य स्नेहस्य कर्तव्यत्वेन निर्देशरूपा प्रतिज्ञा, सैवाध्यवसायः। तदुक्तं दर्पणे--"प्रतिज्ञाऽध्यवसायकः" इति।

विसर्पो यथा शाकुन्तले पञ्चमेऽङ्के, शार्ङ्गरवः—"इत्थमप्रतिहतं चापल्यं दहति।

अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरी भवति सौहृदम्॥

अत्र हि शकुन्तलयेष्टफलसाधनाय समारब्धस्य रहःसङ्गतस्यानिष्टफलपरत्वं शार्ङ्गरवेणोच्यते, शकुन्तलयाऽन्यैश्चाप्यनुभूयत इति विसर्पः। तल्लक्षणं तु दर्पणे—"विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम्" इति।

उल्लेखो यथा शाकुन्तले प्रथमेऽङ्के राजानं प्रति तापसौ—"राजन्! समिदाहरणाय प्रस्थिता वयम्। एष चास्मद्गुरोः कण्वस्य कुलपतेः साधिदैवत इव शकुन्तलयाऽनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः" इति।

उल्लेखलक्षणं तु दर्पणे—"कार्यदर्शनमुल्लेखः" इति।

उत्तेजनं यथा शाकुन्तले षष्ठेऽङ्के, नेपथ्ये मातलिवाक्यम्—

"एष त्वामभिनवकण्ठशोणितार्थी...." इत्यादि।

अत्र हि शकुन्तलाविरहजन्मना मनःसन्तापेन विकृतो राजा, मातलिना स्वकार्यस्य देवपुरं प्रति तदानयनरूपस्य सिद्धये कठोरया वाचा क्षोभमुत्पाद्य धनुर्ग्रहणाय प्रेरितः। एतच्चोक्तं राज्ञा पृष्टेन तेनैवाग्रे। मातलिः—(सस्मितम्) तदपि कथ्यते—किञ्चिन्निमित्तादपि मनःसन्तापाद् आयुष्मान् मया विकृतो दृष्टः, पश्चात् कोपायितुमायुष्मन्तं तथा कृतवानस्मि; कुतः?—

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः॥ इति।

उत्तेजनलक्षणं यथा दर्पणे—

......उत्तेजनमितीष्यते।
स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक्॥ इति।

परीवादो यथा शाकुन्तले पञ्चमेऽङ्के, शार्ङ्गरवः—"मा तावत्,

कृताबमर्षामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन।

परीवादलक्षणं तु दर्पणे—"भर्त्सना तु परीवादः" इति।

नीतिर्यथा शाकुन्तले प्रथमेऽङ्के, दुष्यन्तः—(अवतीर्यात्मानमवलोक्य च) "सूत! विनीतवेषेण प्रवेष्टव्यानि तपोवनानि" इति।

नीतिलक्षणं यथा दर्पणे—"नीतिः शास्त्रेण वर्तनम्" इति। अत्र वर्तनं कर्मानुष्ठानम्।

अर्थविशेषणं यथा शाकुन्तले पञ्चमेऽङ्के राजानं प्रति शार्ङ्गरवः—"आः! किं नाम किमिदमुपन्यस्तमिति? ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः।"

सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः॥

अत्र शार्ङ्गरवेण राज्ञः प्रतिकूलोक्तिखण्डनेन राज्ञोक्तस्यार्थस्य (किमुपन्यस्तम्) इत्यस्योत्कीर्तनमित्यर्थविशेषणं भवति। तल्लक्षणं तु दर्पणे—

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा।
उपालम्भविशेषेण तत् स्यादर्थविशेषणम्॥ इति।

अत्रोपालम्भविशेषेणेत्यस्य प्रतिकूलोक्तिखण्डनेनेत्यर्थः।

उत्कीर्तनं सूचनं प्रोत्साहनं यथा शाकुन्तले द्वितीयेऽङ्के, राजा—(विचिन्त्य) "सखे! माधव्य! त्वमपि अम्बाभिः पुत्र इव गृहीतः। स भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्यमनुष्ठातुमर्हति।" अत्र ह्यनेन वाक्येन राज्ञा विदूषकस्योत्साहवर्धनं क्रियते। षष्ठेऽङ्के च मातलिः—

सख्युस्ते स किल शतक्रतोरवध्यः तस्य त्वं रणशिरसि स्मृतो निहन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिस्तन्नैशं तिमिरमपाकरोति चन्द्रः॥

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्" इति।

अनेन वाक्येन मातलिना राज्ञ उत्साहवर्धनं क्रियते। प्रोत्साहनलक्षणं यथा दर्पणे—

प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम्। इति।

साहाय्यं यथा शाकुन्तले षष्ठेऽङ्के—( नेपथ्ये ) "अभिधाव भोः ! अभिधाव। राजा—( आकर्ण्य गतिभेदं रूपयित्वा ) सखे ! न भेतव्यम्, न भेतव्यम्। ( नेपथ्ये ) भोः ! कथं न भेष्यामि, एष मां कोऽपि प्रत्यामोट्य शिरोधराम् इक्षुमिव भग्नास्थि कर्तुमिच्छति। राजा—( सदृष्टिक्षेपम् ) धनुर्धनुः" इत्यादि।

अत्र हि विदूषकस्य प्राणसङ्कटे राज्ञोऽभयवचनधनुर्ग्रहणादिरूपमनुकूलाचरणमिति साहाय्यम्। साहाय्यलक्षणं तु दर्पणे—

साहाय्यं सङ्कटे यत्स्यात् सानुकूल्यपरस्य च। इति।

अभिमानो यथा शाकुन्तले पञ्चमेऽङ्के शार्ङ्गरवं प्रति, राजा—"विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्"। अत्र राज्ञ इदं स्वकुलाभिमानव्यञ्जकं वचनमित्यभिमानः।

अभिमानलक्षणं यथा दर्पणे—"अभिमानः स एव स्यात्" इति।

अनुवर्तनं यथा शाकुन्तले प्रथमेऽङ्के, शकुन्तलां प्रति राजा "अयि तपो वर्धते ? अनसूया—इदानीमतिथिविशेषलाभेन" इत्यादि।

अनुवर्तनलक्षणं यथा दर्पणे—"प्रश्रयादनुवर्तनमनुवृत्तिः"। अनुवृत्तिः प्रत्युत्तरादिना सत्कार इति व्याख्यातं रामचरणतर्कवागीशेन।

उत्कीर्तनं यथा शाकुन्तले सप्तमेऽङ्के राजानं प्रति मारीचः—

"यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीमुपगता मेनका, तदैव ध्यानादवगतवृत्तान्तोऽस्मि, दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणा प्रत्यादिष्टा, स चाङ्गुरीयकदर्शनावसानः शापः" इति।

अत्र भूतकार्याख्यानादुत्कीर्तनम्। तल्लक्षणन्तु दर्पणे—

"भूतकार्याख्यानमुत्कीर्तनं मतम्" इति।

याच्ञा द्विधा—स्वयंकृता दूतमुखेन वा। तत्र स्वयंकृता याच्ञा लाघवकरी इत्युपेक्षिता शाकुन्तले। दूतमुखेन याच्ञा तु नाट्यालङ्कारत्वादत्र प्रदर्शिता। तत्र याच्ञा यथा शाकुन्तले चतुर्थेऽङ्के कण्ववाक्ये—

अस्मान् साधुविचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥

'अत्र सामान्यप्रतिपत्तिः' इति वाक्येन कण्वेन शार्ङ्गरवमुखेन राजानं प्रति याच्ञा कृता । अस्या याच्ञारूपत्वं तु 'भाग्यायत्तमतः परम्' इति चतुर्थपादावलोकनात् प्रतीयते ।

याच्ञालक्षणं तु दर्पणे—

याच्ञा तु क्वाऽपि याच्ञा या स्वयं दूतमुखेन वा ।

परिहारो यथा शाकुन्तले सप्तमेऽङ्के राजा—"उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य कान्ते ! प्रमृज्य विगतानुशयो भवामि ॥

( इति यथोक्तं करोति ) अत्रैव राजा—

सुतनु ! हृदयात् प्रत्यादेशव्यलीकमुपैतु ते
किमपि मनसः सम्मोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥

इति पादयोः पतति" ।

परिहारलक्षणं यथा दर्पणे—

परिहार इति प्रोक्तः कृतानुचितमार्जनम् । इति ।

निवेदनं यथा शाकुन्तले पञ्चमेऽङ्के राजानं प्रति शार्ङ्गरवः—"किं कृतकार्यद्वेषाद् धर्मं प्रति विमुखतोचिता राज्ञः" । अत्र लोके शास्त्रे चावधीरितस्य स्वदारपरिग्रहवैमुख्यरूपस्य कर्तव्यस्य राजानं प्रति कथनाद् निवेदनम् । एतल्लक्षणं यथा दर्पणे—"अवधीरितकर्तव्यकथनं तु निवेदनम्" इति ।

प्रवर्तनं यथा शाकुन्तले सप्तमेऽङ्के शिष्यगालवं प्रति मारीचवाक्यम्, मारीचः—"वत्स गालव ! मद्वचनादिदानीमेव वैहायस्या गत्या तत्रभवते कण्वाय प्रियमावेदय—यथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्यन्तेन परिगृहीता" इति ।

अत्र हि दुष्यन्तेन शकुन्तलायाः पुत्रसहितायाः परिग्रहरूपस्य कार्यस्य कण्वं प्रति दूतमुखेन निवेदनोपक्रमात् कार्यस्य साधु प्रवर्तनमस्तीति भवत्यत्र प्रवर्तनम्।

तल्लक्षणं तु यथा दर्पणे—

प्रवर्तनं तु कार्यस्य यत्स्यात् साधु प्रवर्तनम्।

आख्यानं यथा शाकुन्तले षष्ठेऽङ्के विदूषकं प्रति राजा—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्॥

अत्र पूर्ववृत्तस्य शकुन्तलाचेष्टितस्य वचनादाख्यानम्।

आख्यानलक्षणं यथा दर्पणे—"आख्या पूर्ववृत्तोक्तिः" इति।

युक्तिर्यथा शाकुन्तले प्रथमेऽङ्के राजवाक्यम्—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

अत्र हि स्वकीयार्यमनोऽभिलाषविषयत्वेन हेतुना शकुन्तलायाः क्षत्रपरिग्रहक्षमत्वरूपस्यार्थस्यावधारणाद्युक्तिः।

युक्तिलक्षणं तु दर्पणे—"युक्तिरर्थावधारणम्" इति।

प्रहर्षो यथा शाकुन्तले सप्तमेऽङ्के राजा—(सहर्षमात्मगतम्) "तत्किं खल्विदानीं पूर्णमात्मनो मनोरथं नाभिनन्दामि"। प्रहर्षलक्षणं यथा दर्पणे—"प्रहर्षः प्रमदाधिक्यम्" इति।

उपदेशनं यथा शाकुन्तले प्रथमेऽङ्के, अनसूया—"सखि! न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्।" अत्र हि अनसूयायाः शकुन्तलां प्रति शिक्षावाक्यमिदमित्युपदेशनम्। यत्र हि विधिं विनां कार्यवस्तुन औचित्यानौचित्यप्रदर्शनपुरःसरं यथार्थस्वरूपज्ञापनं सा शिक्षा। तदेव चोपदेशनम्। यत्र तु नैवं किन्तु विधिस्तत्रोपदिष्टं नाम नाटकलक्षणम्। तच्च पूर्वमुक्तमेव, यथा 'शुश्रूषस्व गुरून्' इत्यादि।

मुनिना यन्नाटकलक्षणमुक्तं तत्सर्वमेव शाकुन्तले सम्भवतीति प्राक् प्रदर्शितम् , दर्शयिष्यते चाग्रे।

मुन्युक्तं नाटकलक्षणं यथा—

पञ्चसन्धिचतुर्वृत्तिचतुष्षष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम् ।
महापुरुषसत्कारं साध्वाचारं जनप्रियम् ॥
सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥ इति।

तत्र पञ्चसन्धयः, चतस्रो वृत्तयः, चतुष्षष्ट्यङ्गानि, षट्त्रिंशल्लक्षणानि, त्रयस्त्रिंशन्नाट्यालङ्कृतयश्च प्राक् प्रदर्शिताः शाकुन्तले। इदं नाटकं महारसमपि, यतोऽत्रादौ सम्भोगः, मध्ये च विप्रलम्भः, अन्ते च सम्भोगः कविना चारुभिः सन्दर्भैर्व्यञ्जितोऽत्यन्तं स्वदते। इदं च महाभोगमपि। तथाहि—भावः, भावाभासादिः सहायो वा तद्द्वयमप्यत्र वर्तते।

राजविषयको भावो यथा शाकुन्तले द्वितीयेऽङ्के—"अध्याक्रान्ता वसतिरमुना" इत्यत्र।

मुनिविषयको भावो यथा शाकुन्तले सप्तमेऽङ्के—"प्राणानामनिलेन वृत्तिरुचिता" इत्यत्र।

रसाभासो यथा शाकुन्तले षष्ठेऽङ्के—'कार्या सैकतलीनहंसमिथुना' इति पद्ये। "शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्" इत्यत्र च रतेस्तिर्यग्गतत्वेन शृङ्गाराभासः। एवमन्यत्रापि भावाभाससन्ध्यादीन्युदाहर्तव्यानि।

सहायो यथाऽत्र, इन्द्रो मारीचोऽमात्यपुरोहितादिरूपो वर्णितः। इदं च नाटकमुदात्तरचनान्वितमपि। रचनाया उदात्तत्वं च विलाससमृद्धियुक्तत्वम्। तत्र विलासलक्षणं यथा साहित्यदर्पणे—

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिजा॥

तत्र विलासो यथा शाकुन्तले प्रथमेऽङ्के, एतल्लक्षणलक्षितः शकुन्तला-दुष्यन्तयोर्बाहुल्येन प्रसिद्धः। समृद्धिश्चात्रोपवर्णिता दुष्यन्तप्रासादवर्णनावसरे षष्ठेऽङ्के। किञ्च ( प्राणानामनिलेन ) इति पद्येऽपि निरतिशया समृद्धिर्वर्णिता।

महापुरुषसत्कारमपि। तथाह्यत्र महापुरुषस्य धीरोदात्तनायकस्य दुष्यन्तस्य सत्कारो गुणवर्णनं तत्र तत्र दृश्यते। धीरोदात्तनायकलक्षणं तु यथा दर्पणे—

अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥ इति।

साध्वाचारमपि—आचारो वैदिकं कर्म साधुरविगीतो वर्तते तत्र तत्र तपोवन-वर्णनावसरे। जनप्रियत्वं त्वद्यापि न जहात्येतन्नाटकम्। "सुश्लिष्टसन्धियोगं च" इत्यादिकमप्यन्विष्यमाणं नात्र हीयते।

अत्र सुखदुःखसमुद्भूतिरपि यथावत् प्रदर्शिता। तद्यथा शकुन्तलादुष्यन्तयोः सुखसमुद्भूतिः प्रथमेऽङ्के, दुःखसमुद्भूतिश्च तयोः पञ्चमेऽङ्के, षष्ठे च। पुनरपि सुखसमुद्भूतिः सप्तमे प्रदर्शिता।

अत्र च प्रख्यातवंशः—चन्द्रवंश्यः पुरुवंश्यश्च राजर्षिदुष्यन्तो नायकः। स च राजर्षिरपि दिव्यादिव्यः। तत्रादिव्यत्वं मनुष्यभावात्, दिव्यत्वं तु दिव्य-सहचरत्वात् दिव्यकार्यकारित्वाच्च। अस्य दुष्यन्त इति संज्ञा—दुष्धातोः ( इक्श्तिपौ धातुनिर्देशे ) इति इक्प्रत्यये दुषिः। दुषिः—दुष्धातुः। तस्य च धातुपरस्य धात्वर्थे लक्षणा। एवञ्च दुषीणां दोषाणामन्तः समाप्तिर्यत्रेति व्युत्पत्त्या दोषाभाववान् दुष्यन्तपदेनोच्यते।

यत्तु केनचिदन्धगोलाङ्गूलन्यायेन 'दुष्मन्त' इति नाम सर्वत्रैवात्र नाटके प्रयुक्तम्, तत्त्ववयवार्थानुगमाभावादुपेक्ष्यः। दृश्यते च धातुपरस्यापि निर्देशस्य धात्वर्थे लक्षणा। "ईक्षते नाशब्दम्" इत्यादौ वेदान्तसूत्रे तद्भाष्ये च।

दशविधेषु लास्याङ्गेषु प्रच्छेदकाख्यमङ्गमपि पञ्चमेऽङ्के दृश्यते। तद्यथा—

अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम्॥

प्रच्छेदकलक्षणं यथा दर्पणे—

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः॥ इति।

नाट्यशास्त्रे तु—

प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥

इत्युक्तम् । तत्त्वत्र न सम्भवति । तन्मते त्विदं ज्ञेयपदस्योदाहरणं द्रष्टव्यम् । दर्पणलक्षणे स्वीकृते तु गेयपदप्रच्छेदकयोः सङ्करो द्रष्टव्यः ।

एतच्च शाकुन्तलं नाटकं यद्यपि सप्तभिरेवाङ्कैर्युक्तं तथापि सर्वैः पताकास्थानकैर्योगाद् महानाटकमेव, ग्रन्थविस्तराभावेऽपि चमत्कारकारित्वात् । महानाटकलक्षणं यथा दर्पणे—

एतदेव पदा सर्वैः पताकास्थानकैर्युतम् ।
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥ इति ।

अत्र निर्वहणसन्धावद्भुतो रसः । यथा शाकुन्तले सप्तमेऽङ्के तापसीवाक्ये—"आश्चर्यम् ! आश्चर्यम् ! राजा–आर्ये ! किमिव ? तापसी अस्य बालकस्यासम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मिताऽस्मि, अपि च वामशीलोऽपि भूत्वा अपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्त इति ।

राजवाक्ये च तत्रैवाङ्के—"भगवन् ! इमामाज्ञाकरीम्" इत्यारभ्य "तच्चित्रमिव मे प्रतिभाति" इत्यन्ते सन्दर्भे ।

अत्र यद्यपि पात्रभूताः पञ्चदशपुरुषाः सन्ति, तद्यथा—दुष्यन्तः, तस्य सूतः, विदूषकः, पुरोहितः, सेनापतिः, कण्वः, शार्ङ्गरवः, शारद्वतः, मातलिः, मारीचः, जालुकः, रक्षिणौ, नागरिकः, अमात्यश्चेति; तथाप्यत्र मुख्यकार्यव्यापृताः पुरुषाः—दुष्यन्तः, कण्वः, मारीचः, मातलिश्चेति चत्वार एव मुख्या भवन्ति । तथाहि कार्येऽसाधारणकारणत्वमेव मुख्यत्वम् । तच्चैतेषां चतुर्णामेव भवति । एतेषां कार्याण्यत्र नाटके नामग्राहमुपस्थापितानि नान्यः कर्तुं प्रभवति । अन्येषां कार्याणि नामग्राहमनामग्राहं वात्रोपस्थापितानि, अन्येऽपि कर्तुं प्रभवन्तीति ते न मुख्याः । तदुक्तं दर्पणे—

चत्वारः पञ्च वा तत्र कार्यव्यापृतपूरुषाः । इति ।

यच्चोक्तं दर्पणे—"गोपुच्छाग्रसमागन्तुं बन्धनं तस्य कीर्तितम्" इत्यस्य गोपुच्छाग्रमिति क्रमेणाङ्काः सूक्ष्माः कर्तव्या इति केचित् । अन्ये त्वाहुः—'यथा गोपुच्छे

केचिद्वाला ह्रस्वाः केचिद्दीर्घाः, तथेह कानिचित् कार्याणि मुखसन्धौ समाप्तानि कानिचित् प्रतिमुखे। एवमन्येष्वपि कानिचित् कानिचिदिति।'

तत्राद्योऽर्थो न युक्तः, शाकुन्तलेऽन्यत्रापि च नाटकेषु एतस्यार्थस्य व्यभिचार-दर्शनात्। अतो द्वितीयोऽर्थ एव युक्तः। 'गोपुच्छाग्रसमाग्रम्' इत्यस्य गोपुच्छाग्रेण ह्रस्वदीर्घवालघटितेन समं सदृशमग्रं मुखसन्धेरुपरितनो भागो यस्य तत् 'गोपुच्छाग्र-समाग्रम्' इति। एवमेवाङ्का दृश्यन्ते। तथाहि—द्वितीयो ह्रस्वः, तृतीयो दीर्घः, चतुर्थस्ततो ह्रस्वः, ततः पञ्चमो दीर्घः, षष्ठस्ततोऽपि दीर्घः, सप्तमस्तु ततो ह्रस्व इति।

वस्तुतस्तु तत्तत्सन्धिषु समाप्तानि कार्याण्यनुसृत्यैव ह्रस्वत्वं दीर्घत्वं चात्र बोध्यम्। न त्वङ्कानां ह्रस्वत्वं दीर्घत्वं चात्रापेक्षितमिति 'गोपुच्छाग्रसमाग्रम्' इत्यस्य द्वितीयव्याख्यादर्शनेन प्रतीयते। तथाप्यत्राङ्कानामपि ह्रस्वत्वं दीर्घत्वञ्च केषाञ्चित् केषाञ्चिद् वर्तत इति तदप्यत्र कर्तव्यकोटौ निविष्टमिति तत्र मुखसन्धि-कार्याणां समाप्तिः प्रथमेऽङ्के। तत ऊर्ध्वं प्रतिमुखसन्धिकार्याणां समाप्तिस्तृतीया-ङ्कावसाने। ततः परं गर्भसन्धिकार्याणां समाप्तिः पञ्चमाङ्कमध्ये। तदनन्तरं प्रवृत्तानां विमर्शसन्धिकार्याणां समाप्तिः षष्ठाङ्कावसाने। तत ऊर्ध्वं प्रवृत्तानां निर्वहण-सन्धिकार्याणां समाप्तिः सप्तमाङ्कावसान इत्येव कानिचित् कार्याणि लघूनि कानिचि-द्दीर्घाणीति गोपुच्छाग्रसमाग्रत्वमुपपादितं भवति।

## अथाङ्कसमीक्षा

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः।
युक्तो न बहुभिः कार्यैः बीजसंहृतिमान्न च॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः॥
नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा॥

दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरञ्च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥

इत्यङ्कलक्षणमुक्तं साहित्यदर्पणे ।

तत्र शाकुन्तले सप्तस्वङ्केषु नेतुर्दुष्यन्तस्य चरितं कविना तथोपनिबद्धं यथा प्रत्यक्षवदाभासत इति प्रत्यक्षनेतृचरित इत्यङ्कविशेषणं तत्रोपपद्यते ।

सर्वे चाङ्काः प्रधानीभूतेन शृङ्गारेणाप्रधानीभूतैश्चान्यैर्वीरभयानकाद्भुतादिभिः, भावैश्च तत्तद्रसानां स्थायिसञ्चारिभिश्च यथायोगमुपदर्शितैः समुज्ज्वल इति रसभावसमुज्ज्वल इति विशेषणमप्युपपन्नं भवति ।

अगूढशब्दार्थत्वञ्च महाकविकालिदासे सहजसिद्धमिति न विमृश्यम्, अत्र च नाटके क्षुद्रचूर्णका गद्यप्रभेदा बहुलमन्तराऽन्तरोपन्यस्ता इति 'क्षुद्रचूर्णकसंयुतः' इति विशेषणमपि श्लिष्यते ।

'विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः' इत्यङ्कविशेषणमपि सर्वेषु शाकुन्तलीयेष्वङ्केषु सर्वत्र दृश्यते । तथाहि—प्रथमेऽङ्के, (नेपथ्ये) भोः भोस्तपस्विनः ! इत्यादिनाऽवान्तरकथाप्रवृत्ति विच्छेदो दर्शितः । पुनरपि सख्यौ—'महाभाग ! अनेन हस्तिसम्भ्रमेण पर्याकुलाः स्मः' इत्यादिनाऽङ्कपर्यन्तमच्छेदकारणबिन्दुर्दर्शितः । द्वितीयेऽङ्केऽपि राजा—सखे माधव्य ! इत्यादिना मृगयासम्बन्धिवार्तया विच्छिन्नायाः शकुन्तलाकथाया अच्छेदकारणं बिन्दुर्दर्शितः । तृतीयेऽङ्केऽपि, चक्रवाकवधु ! आमन्त्रय सहचरम्, इत्यादिना विच्छिन्नायाः शकुन्तला वार्तायाः, शकुन्तला—(कथञ्चिदुत्थाय स्वगतम्) इत्यादिनाऽङ्कपर्यन्तमच्छेदकारणं बिन्दुर्दर्शितः । चतुर्थेऽप्यङ्के, (पुनर्नेपथ्ये) आः ! कथमतिथिं मां परिभवसि, इत्यादिना विच्छिन्नायाः शकुन्तलासम्बन्धिन्याः कथायाः, अनसूया—ततस्तेन भणितम्, इत्यादिना पुनरप्यच्छेदकारणं बिन्दुर्दर्शितः । पञ्चमेऽङ्केऽपि राजा—साशङ्कमाकर्ण्येत्यादिना गौतमि ! गच्छाग्रत इति सर्वे निष्क्रान्ता इत्यन्तेन विच्छिन्नायाः शकुन्तला-

परिग्रहकथायाः पुनरप्यच्छेदकारणं बिन्दुर्दर्शितः। राजा--यथा गुरुभ्यो रोचते इत्यादिना। षष्ठेऽङ्केऽपि मातलेरागमने विदूषकस्य पीडनेन विच्छिन्नायाः शकुन्तला-परिग्रहकथायाः पुनरप्यच्छेदकारणं बिन्दुर्दर्शितः। मातलिः—आयुष्मन्! रथमारोहतु: राजा तथा करोति, अनेन हि कथोपन्यासेन शकुन्तलाप्राप्तिप्रकारो भविष्यन्नुपक्षिप्तः।

सप्तमेऽङ्केऽपि तपस्विनीभ्यां सहितस्य बालस्य क्रीडादर्शनप्रसङ्गेन विच्छिन्नस्य मुनिदर्शनरूपस्यार्थस्य पुनरप्यच्छेदकारणं बिन्दुर्दर्शितः, मातलिः (सस्मितम्) किमीश्वराणां परोक्षम्, एहि भगवान् मारीचस्ते दर्शनमिच्छतीत्यादिना।

नानाविधानसंयुक्तत्वञ्च शाकुन्तले तत्र तत्र दृश्यते। तथाहि—प्रथमेऽङ्के प्रियंवदावाक्ये—"स्वागतमार्यस्य, हला शकुन्तले! गच्छोटजात् फलमिश्रमर्घ्यभाजन-मुपहर, इदमपि पादोदकं भविष्यति" इत्यतिथिसत्काररूपं विहितं कर्म। तत्रैव च प्रियंवदावाक्य एव—"गुरोः पुनरस्या अनुरूपवरप्रदानसंकल्पः" इति। अत्रानुरूप-वरप्रदानरूपं विहितं कर्म।

द्वितीयेऽङ्के च करभकाभिहिते मातॄणां सन्देशवाक्ये—"आगामिनि चतुर्थ-दिवसे पुत्रपिण्डपालनो नामोपवासो भविष्यति' तृतीयेऽङ्के शिष्यवाक्ये—"यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपहरामि"। यथा वा तत्रैवाकाशभाषिते—"अहमपि तावद् वैतानिकं शान्त्युदकमस्या एव गोतमीहस्ते विसर्जयामि"। तृतीये एवाङ्के प्रियंवदावाक्य एव—"आश्रमवासिनो जनस्य राज्ञा आर्तिहरेण भवितव्यमिति नन्वेष धर्मः"। तत्रैव च राजवाक्ये—

गान्धर्वेण विवाहेन बह्वोऽथ मुनिकन्यकाः।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः॥

तत्रैव च नेपथ्ये—

सायन्तने सवनकर्मणि सम्प्रवृत्ते।
वेदिं हुताशनवतीं परितः प्रकीर्णाः॥
छायाश्चरन्ति बहुधा भयमादधानाः।
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम्॥

चतुर्थेऽप्यङ्केऽनसूयावाक्येषु—"गान्धर्वेण विवाहविधिना निवृत्तकल्याणेति, इष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित इति, तीर्थयात्रातः प्रतिनिवृत्त इति" विहित-कर्मानुवादवचनानि। तत्रैव प्रियंवदावाक्ये—"अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि" इति। अनसूयावाक्ये—"ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चयितव्यास्तदपराण्यापि अवचिनुम।" प्रियंवदावाक्ये च—"यावदस्याहमप्यर्घोदकमुपकल्पयामि"। तत्रैव चानसूयावाक्ये—"देवकार्यं तावदस्या निर्वर्तयावः" इति वाक्येषु नानाविधानसंयोगः। तत्रैव च—"तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केसरगुण्डा निक्षिप्ता तिष्ठति, तदिमां नलिनीपत्रसङ्गतां कुरु, यावदस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालम्भनानि विरचयामि।" तत्रैवाङ्के—

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु॥

तत्रैवाङ्के शिष्ययोर्वाक्ये—"भगवन्! ओदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते" इति। पञ्चमेऽङ्के वैतालिकवाक्ये—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम्॥

तत्रैवाऽङ्के राजवाक्ये च—"श्रौतेन विधिना सत्कृत्य" इति। षष्ठेऽङ्के च राजवाक्ये—"शचीतीर्थे सलिलं वन्दमानायास्ते......" तत्रैवाङ्के राजवाक्ये च—"अद्य चिरप्रबोधाद् न सम्भावितमस्माभिर्धर्मासनमध्यासितुम्, यत्प्रत्यवेक्षितमार्येण पौरकार्यं तत्पत्रमारोप्य प्रस्थाप्यताम्" इति। षष्ठेऽङ्के एव द्वितीयचेटीवाक्ये—"सखि! अवलम्बस्व माम्, यावदग्रपदे स्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्यार्चनम्" इति।

सप्तमेऽङ्के राजवाक्ये—"प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि" इति। तत्रैव मातलिवाक्ये—

वल्मीकाग्रनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीडितः।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः॥

तत्रैव राजवाक्य एव—"प्राणानामनिलेन वृत्तिरुचिता......" इत्यादि तत्रैवाङ्के मारीचवाक्ये—"विधिवदनुष्ठितजातकर्मादिक्रियः" इति विहितकर्मानुवादः। मारीचवाक्य एव—

तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
युगशतपरिवृत्तैरेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः॥ इत्यादि।

"आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा" इतीदमपि शाकुन्तलाङ्केषु दृश्यते।

यद्यपि नाटके परिवर्जनीयत्वेनाभिहितः शापः शाकुन्तले दुर्वासःशापरूपतयोपन्यस्तः; तथापि स न दोषः। तथा हि—यत्र शापस्यानवधित्वं, तत्रैव स दोषः, उद्वेजकत्वात्। अयं त्वभिज्ञानावधिरिति मत्वा कविनोपनिबद्ध इति मन्ये।

अस्मिंश्च शाकुन्तलेऽङ्केषु यानि परिहर्तव्यान्युक्तानि तानि परिहृतानि। एवञ्च दर्पणोक्तमङ्कलक्षणं सर्वं समन्वितं भवति शाकुन्तलाङ्केषु।

### पात्रसमीक्षा

तत्र यद्यपि पूर्वं शाकुन्तलनायको दुष्यन्तो दिव्यादिव्यो धीरोदात्तश्चेत्युक्तम्, एवमपि दक्षिणधृष्टानुकूलशठरूपेषु धीरोदात्तस्य चतुर्षु भेदेषु कतम इति न निर्धारितम्। तदधुना प्रदर्श्यते—दुष्यन्तोऽनुकूलो धीरोदात्त इति युज्यते। यतः "अनुकूल एकनिरतः" इत्यनुकूलस्य लक्षणं दर्पणे उक्तम्। व्याख्यातं च स्वयमेव ग्रन्थकृता—"एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः" इति।

एवं च दुष्यन्तस्य बहुभार्यत्वेऽपि शकुन्तलायामेवासक्तिरासीदिति महाभारत-पद्मपुराणशाकुन्तलनाटकदर्शनेन प्रतीयत इति दुष्यन्तस्यानुकूलनायकत्वमेव। अतोऽस्य न दक्षिणनायकत्वम्, अनेकत्र समरागाभावात्। तदुक्तं दक्षिणनायकलक्षणं दर्पणे—"एषु त्वनेकमहिलासमरागो दक्षिणः कथितः" इति।

अयं च सर्वैर्नायकगुणैर्युक्त उत्तमनायक इत्यपि शाकुन्तलदर्शनेन प्रतीयते। धीरोदात्तलक्षणं तु—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

तत्र क्वचिदपि शाकुन्तले आत्मश्लाघाया अनुपन्यासेनाविकत्थनो दुष्यन्तः। तत्रैव च हर्षशोकाद्यनभिभवदर्शनेन महासत्त्वः। यद्यपि शाकुन्तले शकुन्तलावियोग-काले राज्ञः शोकाभिभवः, आश्रमे च लतागृहे शकुन्तलायाः पुनःप्राप्तौ हर्षाभिभवः, जालुकहस्ताच्चाङ्गुलीयकप्राप्तौ शोकाभिभव इति सम्भाव्यते; तथापि तदा तदा हर्षशोकयोः प्राप्तावपि न ताभ्यामभिभवस्तस्येति वक्तुं शक्यते। यतः कण्वाश्रमे पुनः शकुन्तलाप्राप्तावपि गजकृताश्रमबाधानिवारणाय तां परित्यज्य राज्ञो गमनं तत्रोपवर्णितम्। शकुन्तलावियोगकालेऽपि मातलेर्निग्रहः शाकुन्तल उपवर्णित इति न शोकाभिभवः। क्षमावानपि दुष्यन्तः, यतः शाकुन्तले पञ्चमेऽङ्के शार्ङ्गरवस्याधि-क्षेपवचांसि मुहुर्मुहुः क्षान्तानि तेन।

अतिगम्भीरोऽपि दुष्यन्तः। अतिगम्भीरो दुरवबोधाभिप्रायः। तद्यथा शाकुन्तले द्वितीयाङ्कावसाने राज्ञा विदूषकं प्रति स्वकीयः शकुन्तलायामनुरागो विवृतोऽपि निगूहितः। तद्यथा—( विदूषकं हस्ते गृहीत्वा प्रकाशम् ) 'सखे माधव्य ! ऋषिगौरवा-दाश्रमपदं प्रविशामि, न खलु सत्यमेव तापसकन्यायामभिलाषो मे। पश्य—

क्व वयं क्व परोक्षमन्मथो मृगशावैः सह वर्धितो जनः।
परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः॥

इत्यादिना। अत एव षष्ठेऽङ्के विदूषकवाक्यम्—"न विस्मरामि, किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितम्—परिहासविजल्पित एव न भूतार्थः इति। मयाऽपि मन्दबुद्धिना तथैव गृहीतम्, अथवा भवितव्यता खल्वत्र बलवतीति।

निगूढमानो विनयच्छन्नगर्वः । तद्यथा शाकुन्तले सप्तमेऽङ्के—राजा—तत्र खलु शतक्रतोरेव महिमा । पश्य—

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां बधाय
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ इति ।

दृढव्रतः अङ्गीकृतनिर्वाहकः । तद्यथा—शाकुन्तले द्वितीयेऽङ्के राज्ञा तपस्विनः प्रति यज्ञविघ्ननिवारणं प्रतिज्ञातम् ।

तृतीयेऽङ्के च "भो भोस्तपस्विनः । मा भैष्ट मा भैष्ट, अयमहमागत एव" इत्यनेन निर्व्यूढं च । स्थेयान् कर्मणि स्थिरतरः । तद्यथा—शकुन्तलाविरहव्याकुलोऽपि पुरुहूतेनाहूतो दैत्यानां बधार्थं स्वर्गं गतः । नायकसामान्यलक्षणं तु—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यवान् नेता ॥

तत्र त्यागी दाता । तस्योदाहरणम्—जालुकाय बहुधनप्रदानम् । कृती वीरः । उदाहरणम्—स्वर्गे देवेन्द्रारिनिग्रहः । कुलीनः सत्कुलोद्भवः, स च पौरववंशप्रसवेन । सुश्रीकः शरीरसम्पदा राज्यसम्पदा च । रूपयौवनोत्साही—रूपादित्रयवान् । तत्रोत्साहः कर्मण्यध्यवसायः । स चाखेटके मृगमनुसरतो दृष्टः । दक्षः तत्तत्क्रियासु समर्थः । अनुरक्तलोकः, अस्योदाहरणम्—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।
यूथानि सञ्चार्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः ॥

अनेन प्रजासु तस्य पुत्र इव वात्सल्यं सूचितम् । तेन प्रजानामपि तस्मिन् स्नेहातिशयः सूचितः । तेजोवैदग्ध्यशीलवान् । तेजः परोत्कर्षासहिष्णुत्वम् । तच्च मातलिनिग्रहे दृष्टम् । वैदग्ध्यं निगूढाभिप्रायज्ञत्वम् । तदपि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे तन्वी स्थिता कतिचिदेव पदानि गत्वा ।

आसीद्विवृत्तवदना च विमोचयन्ती शाखासु वल्कलमसक्तमपि द्रुमाणाम्।

अत्र हि शकुन्तलायाः स्वस्मिन्निगूढो भावो राज्ञा लक्षितः। शीलंसद्वृत्तम्। तच्च—

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

इत्यादिना शकुन्तलाया जात्यन्वेषणेन दर्शितम्। अयं च धीरोदात्तेष्वप्युत्तमः। अस्य पीठमर्दाख्यः सहायस्तु न दर्शितः, दूरानुवर्तिनि प्रासङ्गिक इतिवृत्त एव तस्य सहायत्वात्, तस्य चात्राभावात्।

शृङ्गारेऽस्य सहायास्तु चेटविदूषकाद्या यथासम्भवं शाकुन्तले उक्ता एव। तत्र विदूषकलक्षणं दर्पणे—

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः॥

स्वकर्म हास्यादि।

अस्यार्थचिन्तायां सहायोऽमात्योऽपि दर्शितः शाकुन्तले षष्ठेऽङ्के। तद्यथा—राजा—"वेत्रवति! मद्वचनादमात्यपिशुनं ब्रूहि—अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्मासनमध्यासितुम्, यत्प्रत्यवेक्षितमार्येण पौरकार्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति।"

धीरललितस्यावरोधे सहाया वामनषण्ढाद्या भवन्ति, अस्य धीरोदात्तत्वान्न ते दर्शिताः। अस्य दण्डे सहायास्त्वाटविकाः सैनिकाद्याश्च दर्शिताः शाकुन्तले। धर्मसहायस्तु पुरोहितो दर्शितः शाकुन्तले पञ्चमाङ्कस्यान्ते।

अयं च दुष्यन्तः सात्त्विको नायकः। तत्र सात्त्विकनायकगुणा वर्णिता दर्पणे—

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥

तत्र शोभायाः कार्याणि शूरत्वदक्षत्वादीनि सप्तोक्तानि दर्पणे। तद्यथा—

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता।
नीचे घृणाऽधिके स्पर्धा यतः शोभेति तां विदुः॥

तत्र दुष्यन्तस्य शूरता मातलिना षष्ठेऽङ्के वर्णिता। तस्य कार्यदक्षताऽपि द्वितीयाङ्कस्यान्ते उपदर्शिता। पुरं प्रति विदूषकेण सह सर्वानुयात्रिकसम्प्रेषणरूपेण कार्येण। सत्यमपि तस्य दर्शितं शाकुन्तले सर्वत्रैव तद्वचस्सु अनृतपरिहारेण। महोत्साहश्च दर्शितः प्रथमेऽङ्के हरिणानुसरणे, रक्षसां प्रतीकारे, षष्ठे च मातलिसमागमे। अनुरागिताऽपि दर्शिता—"प्रजाः प्रजाः स्वा इव तन्त्रयित्वा" इत्यादौ। नीचे घृणा ( दया ) अङ्गुलीयकप्रदानेन जालुके दर्शिता। विक्रान्ते मातलौ चाधिके स्पर्धा दर्शिता। षष्ठेऽङ्के इत्येवं शोभारूपसात्त्विकगुणसम्पन्नो दुष्यन्तः। विलासो नामापरो नायकस्य सात्त्विको गुणः। तल्लक्षणं तु दर्पणे—

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः। इति।

तत्र दुष्यन्तस्य धीरा दृष्टिर्यथा प्रथमेऽङ्के, राजा—( निर्वर्ण्यात्मगतम् ) "कथमियं सा कण्वदुहिता शकुन्तला" इत्यारभ्य स्वप्राकट्यं यावत्। गतिश्चित्रा—यथा शाकुन्तले तृतीयेऽङ्के, राजा—"अवसरः खल्वयमात्मानं दर्शयितुम्, ( सहसोपसृत्य )" इति। अत्र हि सहसोपसर्पणे गतेश्चित्रत्वं स्वाभाविकगतिविलक्षणत्वात्।

सस्मितं वचो यथा—शाकुन्तले तृतीयेऽङ्के राजा—( सस्मितम् )

अपराधमिमं तदा सहिष्ये
यदि रम्भोरु! तवाङ्गसङ्गमृष्टे।
कुसुमास्तरणे क्लमापहेऽस्मिन्
स्वजनत्वादनुमन्यसेऽवकाशम्॥

यत्तु दर्पणे विलासस्योदाहरणम्—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एषः॥

तदिदं न युक्तम्, वीरे विलासस्यानौचित्यात्। अत एव दशरूपके विलासलक्षणं तदुदाहरणञ्च शृङ्गाररसानुकूलमेव प्रदर्शितम्। तत्र लक्षणं यथा--"तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु" दयितावलोकनादिकालेऽङ्गे क्रियायां वचने च सातिशयविशेषोत्पत्तिर्विलासः।

तदुदाहरणञ्च यथा मालतीमाधवपद्यम्--

अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद्भूरिसात्त्विकविकारविशेषरम्य-
माचार्यकं विजयिमान्मथमाविरासीत्॥

माधुर्यलक्षणं यथा दर्पणे-- "संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम्"।

तत्र दुष्यन्ते माधुर्यस्योदाहरणं शाकुन्तले षष्ठेऽङ्के मातलिना विदूषकस्य गलग्रहावसरे संक्षोभकारणे सत्यपि राज्ञोऽनुद्वेगो दर्शितः। अत्रानुद्वेगो भयाभावः। गाम्भीर्यलक्षणं यथा दर्पणे--

भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता।

तत्र राज्ञो गाम्भीर्यस्योदाहरणं शाकुन्तले पञ्चमेऽङ्के--"मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तानाम्" इति शार्ङ्गरववाक्ये क्रोधहेतौ श्रुतेऽपि न राज्ञः क्रोधरूपो विकारो लक्षितः।

अत एव शार्ङ्गरवेण पृष्टम्—"भोः राजन् किमिति जोषमास्यते" इति। "भोस्तपस्विनः! चिन्तयन्नपि न खलु स्वीकरणमत्र भवत्याः स्मरामि, तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये? इति राज्ञः प्रतिवचनवाक्येऽपि न क्रोधोद्गमो लक्ष्यते। शकुन्तलावियोगजनितशोकेऽपि राज्ञो निर्विकारतारूपं गाम्भीर्यं यथा शाकुन्तले षष्ठेऽङ्के कञ्चुकिवाक्ये--

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।
चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते॥

धैर्यलक्षणं दर्पणे यथा--

व्यवसायादचलनं धैर्यं विघ्ने महत्यपि।

तत्र राज्ञो धैर्यं यथा शाकुन्तले पञ्चमेऽङ्के शार्ङ्गरवेण गौतम्या स्वयं शकुन्तलया च बहुधा शकुन्तलापरिग्रहस्य प्रबोधनेऽपि राज्ञः स्वनिश्चयादचलनम्।

तेजोलक्षणं यथा दर्पणे--

अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत्।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्॥

तत्र राज्ञस्तेजो यथा—शकुन्तलावियोगदुःखितस्यापि मातलिकृतापमानासहनम्।

ललितलक्षणं यथा दर्पणे--

वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम्।

तत्र शाकुन्तले राज्ञो वाग्वेषयोर्मधुरता प्रथमद्वितीयतृतीयषष्ठेष्वङ्केषु तत्र तत्र दर्शिता।

औदार्यलक्षणं यथा दर्पणे--

दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता।

एतदपि दर्शितम्—"प्रजाः प्रजाः स्वा इव तन्त्रयित्वा" इत्यादौ।

## नायिका समीक्षा

तत्र शकुन्तला कन्यारूपा परकीया नायिका। तदुक्तं दर्पणे--

परकीया द्विधा प्रोक्ता परोढा कन्यका तथा। इति,

कन्या त्वजातोपयमा सलज्जा नव यौवना। इति च।

शकुन्तलायाश्च विरहोत्कण्ठितावस्थैव प्रायेण शाकुन्तले वर्णिता।

नायिकानां च यौवने सत्त्वजा अष्टाविंशत्यलङ्कारा वर्णिता दर्पणे, तद्यथा--

यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः।
अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यञ्च प्रगल्भता।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः॥
लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः॥

विहृतं तापनं मौग्ध्यं विक्षेपं च कुतूहलम् ।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥

तत्र भावलक्षणं दर्पणे यथा--

निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ।

भावोदाहरणं शाकुन्तले यथा प्रथमेऽङ्के शकुन्तलावाक्ये-शकुन्तला (आत्मगतम्) "कथमिमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता" इति ।

हावलक्षणं दर्पणे यथा--

भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्य विकारो हाव उच्यते ॥ इति ।

हावोदाहरणं यथा शाकुन्तले द्वितीयेऽङ्के राज्ञो वाक्यद्वये--

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकथोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥ इति ।

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ इति च ।

हेलालक्षणं यथा दर्पणे—

हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव तु ।

हेलोदाहरणं यथा शाकुन्तले तृतीयेऽङ्केऽनसूयावाक्ये—

"हला शकुन्तले ! अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य, किन्तु यादृशीतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवेति तर्कयामि, तत्कथय किं निमित्तस्तेऽयमायास इति विकारं परमार्थतोऽज्ञात्वाऽनारम्भः किल प्रतीकारस्य" । राजवाक्ये च-अवितथमाह प्रियंवदा, तथाहि—

क्षामक्षामकपोलमाननमुरःकाठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डरा ।

शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ इति ।

शोभालक्षणं यथा दर्पणे—

रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ।
.......................शोभा प्रोक्ता ॥

तत्र रूपशोभा यथा शाकुन्तले द्वितीयेऽङ्के राजवाक्ये—

चित्ते निवेश्य परिकल्पितसर्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥
अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनामुक्तं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि ॥ इत्यादि ।

यौवनशोभाया उदाहरणं यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

लालित्यशोभोदाहरणं यथा शाकुन्तले प्रथमेऽङ्के—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणाद्
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ इति ।

अत्र लालित्यमङ्गानां सुकुमारत्वमिति दर्पणव्याख्याने श्रीरामचरणतर्कवागीशः ।

कान्तिलक्षणं यथा दर्पणे—

"सैव कान्तिर्मन्मथाप्यायितद्युतिः" ।

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यत इति तत्रत्या व्याख्या ।

तत्र कान्तेरुदाहरणं शाकुन्तले तृतीयेऽङ्के राजवाक्ये यथा—

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ इति।

दीप्तिलक्षणं दर्पणे यथा—

कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते।

दीप्तेरुदाहरणं यथा शाकुन्तले तृतीयेऽङ्के राजवाक्ये—

क्षामक्षामकपोलमाननमुरःकाठिन्यमुक्तस्तनम् । इत्यादि।

माधुर्यलक्षणं यथा दर्पणे—

सर्वावस्थाविशेषेषु माधुर्यं रमणीयता। इति

माधुर्योदाहरणं यथा शाकुन्तले प्रथमेऽङ्के—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

यत्तु केनचिन्माधुर्यस्योदाहरणम् —

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति।
विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥

इति पद्यं प्रदर्शितम्, तन्न सम्यक् प्रतिभाति। तथाहि—अत्र वल्कलस्य कान्तरूपत्वं मृगाक्ष्या गात्रसङ्गेन वर्ण्यते, न तु सर्वावस्थाविशेषेषु। "सरसिजमनुविद्धम्" इति पद्ये तु शकुन्तलाया वल्कलसम्बन्धेन तदसम्बन्धेन च सर्वावस्थाविशेषेषु रमणीयत्वं वर्ण्यत इत्येतदेवोदाहरणं माधुर्यस्य भवितुमर्हति।

प्रागल्भ्यं यथा शाकुन्तले पञ्चमेऽङ्के—शकुन्तला (सरोषम्) "अनार्य ! आत्मनो हृदयानुमानेन किल सर्वं प्रेक्षसे, को नामान्यो धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यतीति। द्वितीयमपि शकुन्तलावाक्यम्—

यूयमेव प्रमाणं जानीथ धर्मस्थितिञ्च लोकस्य।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः॥

सुष्ठु, तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता" इति। प्रागल्भ्यलक्षणं यथा—"निःसाध्वसत्वं प्रागल्भ्यम्" इति।

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसम्, तदभावः प्रागल्भ्यमिति।

औदार्यलक्षणं यथा—"औदार्यं विनयः सदा" इति दर्पणे। औदार्योदाहरणं यथा शाकुन्तले पञ्चमेऽङ्के पुरोधोवाक्ये—

सा निन्दन्ती स्वानिभाग्यानि बाला बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता।

अत्र राज्ञा परुषं प्रत्याख्याताऽपि स्वानि भाग्यान्येव निनिन्द, न तु राजानमिति शकुन्तलायाः सार्वदिको विनयः सूच्यते। न च पूर्वोदाहृते (अनार्य····) इत्यादि वाक्येऽविनयः सूच्यत इति वाच्यम्, आर्यवृत्तमतिक्रामति राजनि आर्यभेदकथनस्याविनयरूपत्वाभावात्। अविनयो ह्यविद्यमानधर्मारोपे भवति; न तु विद्यमानवस्तुकथन इति। अन्यदप्यौदार्यस्योदाहरणं यथा शाकुन्तले सप्तमेऽङ्के शकुन्तला वाक्ये—

"उत्तिष्ठतु, उत्तिष्ठतु आर्यपुत्रः, नूनं मे सुखप्रतिबन्धकं पुरा कृतं तेषु दिवसेषु परिणामसुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः" इति। द्वितीये च तत्रैव शकुन्तलावाक्ये—"अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः" इति। अत्रापि पूर्वप्रत्याख्यानपारुष्यविस्मरणेन विनयः सूच्यते।

धैर्यं यथा शाकुन्तले सप्तमेऽङ्के शकुन्तलादुष्यन्तयोर्वाको वाक्यप्रसङ्गे—"उत्तिष्ठतु, उत्तिष्ठतु आर्यपुत्रः" इत्यादि, आत्मश्लाघारहितवाक्येष्वेव धैर्यलक्षणं यथा दर्पणे—"मुक्तात्मश्लाघना नित्यं मनोवृत्तिरचञ्चला" इति।

विलासो नाम नायिकालङ्कारो यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः॥

विलासलक्षणं यथा दर्पणे—

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥ इति।

विच्छित्तिर्यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—'सरसिजमनुविद्धम्' इत्यादि। विच्छित्तिलक्षणं यथा दर्पणे—

स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्। इति

यद्यपि—"विब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः" इति दर्पणोक्तविब्बोकलक्षणानुसारेण शाकुन्तले विब्बोकस्योदाहरणं न सम्भाव्यते, इष्टे वस्तुन्यनादरस्य तत्र तत्र शकुन्तलावाक्ये उपलम्भेऽपि तस्यानादरस्यातिगर्वप्रयुक्तत्वाभावात्, तथापि तस्यानादरस्य चमत्कारकारित्वेनालङ्कारत्वमिष्टमिति तस्य विब्बोक एवान्तर्भावः। अतिगर्वेणेति निमित्तप्रदर्शनं तूपलक्षणम्, न तु परिगणनमित्यप्रधानत्वेन तस्य क्वचिन्निमित्तत्वाभावेऽपि न क्षतिः। एवञ्चाभिज्ञानशाकुन्तले तृतीयेऽङ्के—राजामुखमुन्नमयितुं प्रवृत्तः, शकुन्तला प्रतिषेधं रूपयन्ती विरमतीति कविवाक्ये, प्रथमेऽङ्के च "आसन्नपाणिग्रहणासि त्वम्" इति प्रियंवदोक्तौ—शकुन्तला—"एष ते आत्मनश्चित्तगतो मनोरथः, तन्न ते वचनं श्रोष्यामि" इत्यस्मिन् वाक्ये च विब्बोकोऽव्याहतो वेदितव्यः।

किलकिञ्चितं यथा शाकुन्तले सप्तमेऽङ्के शकुन्तलावाक्ये—"शकुन्तला सहर्षम्) जयतु जयतु आर्यपुत्रः···(इत्यर्धोक्ते बाष्पसन्नकण्ठी विरमति") पुनश्च शकुन्तला—"भागधेयानि पृच्छ" (इति रोदिति) इत्यत्र। अत्र हि हर्षस्य, बाष्पसन्नकण्ठीत्यनेन द्योतितस्य शुष्करुदितस्य रोदिति इत्यनेन रुदितस्य च साङ्कर्यं दर्शितम्। किलकिञ्चितलक्षणं यथा दर्पणे—

स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्।
साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥ इति।

मोट्टायितं यथा शाकुन्तले प्रथमेऽङ्के राजवाक्ये—"राजा (स्वगतम्) कथमिदानीमात्मानं निवेदयामि, कथं वात्मनः परिहारं करोमि; भवतु एवं तावत् (प्रकाशम्) भवति! वेदविदस्मि राज्ञः पौरवस्य नगरधर्माधिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन

धर्मारण्यमिदमायातः। अनसूया "सनाथा इदानीं धर्मचारिणः" (शकुन्तलाशृङ्गार-लज्जां नाटयति) इत्यन्ते वाक्यकदम्बके।

मोट्टायितलक्षणं तु दर्पणे—

तद्भावभाविते चित्ते वल्लभस्य कथादिषु।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्॥

अत्र हि वल्लभस्य दुष्यन्तस्य कथाऽस्त्येव, शृङ्गारलज्जया मुखावनमनादिकञ्च शृङ्गारलज्जां नाटयतीत्यनेन सूचितं कर्णकण्डूयनादिकमित्यत्रादिपदेन च संगृहीतम्।

कुट्टमितं यथा शाकुन्तले तृतीयेऽङ्के, राजा—(स्वगतम्) नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। मुखमुन्नमयितुं प्रवृत्तः), (शकुन्तला प्रतिषेधं रूपयन्ती विरमति) इत्यस्मिन् वाक्यकदम्बके। अत्र हि मुखोन्नमनावसरप्रतिषेधं रूपयन्तीत्यनेन शिरःकरविधूननरूपं प्रतिषेधरूपणं सूचितम्। कुट्टमितलक्षणं दर्पणे यथा—

केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्।
आहुः कुट्टमितं नाम शिरःकरविधूननम्॥

ललितं यथा शाकुन्तले द्वितीयेऽङ्के राजवाक्ये—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।

इत्यादि पद्यस्येदं पूर्वार्धम्। ललितलक्षणं तु दर्पणे—

सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्।

विहृतं यथा शाकुन्तले तृतीयेऽङ्के, शकुन्तला—"यतः प्रभृतिः तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः" इत्यर्धोक्ते।

(सावशेषम्)

# प्रत्यक्षज्ञानमीमांसा

श्रीरामपाण्डेयः, वा. सं. वि. वि. न्यायवैशेषिकाध्यापकः ।

( १९ व. ४ अ. अनुवृत्तम् )

पारमार्थिकमपरोक्षज्ञानमिदं त्रिविधम्—अवधिज्ञानम्, मनःपर्यायज्ञानम्, केवलज्ञानञ्चेति। तत्रावधिज्ञानम्—यदा मानवः स्वकर्माण्यंशतो विनाशयति तदैकैतादृशी शक्तिरुत्पद्यते। यथाऽत्यन्तदूरस्य सूक्ष्मस्यास्पष्टद्रव्यस्यापि परिज्ञानं जायते। एतच्छक्तिद्वारा सीमितवस्तूनामेव केवलं ज्ञानं जायतेऽतोऽदो ज्ञानमवधिज्ञानमिति।

मनःपर्यायज्ञानम्—यदा मानवो रागद्वेषादिमानसिकबाधानामुपरि विजयं लभते तदा सोऽन्यव्यक्तीनां वर्तमानविचाराणां भूतविचाराणामनागतविचाराणाञ्चाभिज्ञो भवति, एतज्ज्ञानं मनःपर्यायज्ञानमिति। एतस्मिन् ज्ञाने जायमाने सति मानवोऽन्यमानवस्यान्यप्राणिनो वा मनसि प्रविशति, तस्य निखिलं चेष्टितं जानाति च।

केवलज्ञानम्—यदा ज्ञानबाधकानि निखिलानि यावन्ति कर्माणि जीवतो दूरं गच्छन्ति विनाशं लभन्ते, तदा जीवोऽनन्तज्ञानमवाप्नोति। ज्ञानञ्चेदं जीवन्मुक्तानां ( केवलिनां ) मुक्तानां च भवति। त्रिप्रकारकमलौकिकज्ञानमिदं पूर्णतयापरोक्षज्ञानमित्युच्यते। एतदतिरिक्तं लौकिकं ज्ञानं द्विविधम्—मतिज्ञानं श्रुतिज्ञानं च।

तत्र मतिज्ञानम्—इन्द्रियैर्मनसा चोत्पद्यते यज्ज्ञानं तन्मतिज्ञानम्, सांव्यवहारिकमपरोक्षज्ञानमान्तरं बाह्यञ्च मतिज्ञानेऽन्तर्भूतमेवं स्मृति-प्रत्यभिज्ञानुमानादीनामप्यत्रैवान्तर्भावः। तथा चोक्तम्—

"मतिः स्मृतिः संज्ञा चिन्ताऽभिनिबोध इत्यनर्थान्तरम्" ( तत्त्वार्थसूत्रे )

सांव्यवहारिकमपरोक्षज्ञानमपि मतिज्ञानम्। तथा चोक्तम्—

"इन्द्रियानिन्द्रियनिमित्तं देशतः सांव्यवहारिकम्" ( प्रमेयकमलमार्तण्डे )

इन्दति परमैश्वर्यं प्राप्नोतीति इन्द्रः। आत्मतत्त्वस्यात्मनो ज्ञापकैकस्वभावस्य मतिज्ञाना-

वरणक्षयोपशमे सति स्वयमर्थान् ग्रहीतुमसमर्थस्य यदर्थोपलब्धिलिङ्गं तदिन्द्रस्य लिङ्गमिन्द्रियमुच्यते। अथवा लीनमर्थं गमयति ज्ञापयतीति लिङ्गमिन्द्रियमुच्यते। आत्मनः सूक्ष्मस्यास्तित्वाधिगमकारकं लिङ्गमिन्द्रियम्। इत्थमिदं स्पर्शनादिकरणमात्मनो (जीवस्य) लिङ्गं ज्ञातव्यम्। आत्मानमन्तरा लिङ्गमिन्द्रियं न भवतीति ज्ञानकर्तुरात्मनोऽस्तित्वमिन्द्रियैरवधार्यते।

तच्चेन्द्रियं पञ्चविधम्—त्वग्-रसन-घ्राण-चक्षुः-श्रोत्रभेदात्। अनिन्द्रियं मनोऽन्तःकरणमिति नार्थान्तरम्। ननु नेन्द्रियमनिन्द्रियमिति इन्द्रियनिषेधेन मनसि इन्द्रियलिङ्गे सत्यप्यनिन्द्रियशब्दस्य कथं प्रवृत्तिरिति चेत्, अत्र नञ्शब्द ईषदर्थे विद्यते नेन्द्रियमनिन्द्रियम्, ईषदिन्द्रियम्। अनुदरा कन्येतिवत्। यथोदरहीना कन्या कथमपि जीवितुं न शक्नोतीति ज्ञायते ईषदुदरा कन्यैवानुदरा कन्या न तूदरहीनेति।

ननु मनसः कथमीषदिन्द्रियत्वमिति चेत्, यथेन्द्रियाणि प्रतिदेशनियतविषयाणि कालान्तरावस्थायीनि च, न तथा मनः, अतो हेतोस्तस्येषदिन्द्रियत्वम्।

तदन्तःकरणं कथमिति चेद् गुणदोषविचारस्मरणादिव्यापारेषु मन इन्द्रियाणि नापेक्षते। किन्तु तानि विनैव निखिलानान्तरव्यापारान् सम्पादयतीत्यन्तःकरणत्वं तस्य सुस्थम्।

इन्द्रियाणि चानिन्द्रियञ्चेन्द्रियानिन्द्रियाणि तानि निमित्तानि यस्य मतिज्ञानस्य तदिन्द्रियानिन्द्रियनिमित्तम्। एवं चेन्द्रियजन्यसांव्यवहारिकमनिन्द्रियजन्यसांव्यवहारिकञ्चेति द्विविधं सांव्यवहारिकप्रत्यक्षम्।

तत्रापि चक्षुरिन्द्रियं मनश्च पदार्थानप्राप्यैव प्रकाशयतः, घ्राणश्रोत्ररसनस्पर्शनेन्द्रियाणि च वस्तूनि प्राप्य प्रकाशयन्ति। आधुनिका वैज्ञानिका आमनन्ति यच्चक्षुरेकं केमरायन्त्रं विद्यते, तत्र पदार्थानां किरणानि प्रतिविम्बितानि जायन्ते, तादृशप्रतिविम्बाच्च ज्ञानतन्तव उद्बुद्धा भवन्ति, ततश्चक्षुस्तान् पदार्थान् पश्यति, चक्षुषि प्रतिविम्बं पतितं केवलं चेतनामुद्बोधयति स्वयं तन्नावलोक्यतेऽतोऽनया प्रक्रियापि जैनदर्शनमतं समर्थितं भवति यज्जैनदर्शने चक्षुषोऽप्राप्यप्रकाशकारित्वमङ्गीकृतं तत्सूपपन्नम्। न तत्र वैज्ञानिकदृष्ट्यापि कस्याश्चन बाधाया उदय इति।

मतिज्ञानात्मकं सांव्यवहारिकेन्द्रियप्रत्यक्षं चतुर्विधम्—अवग्रहेहावायधारण-भेदात्। तथा च सूत्रम्—"अवग्रहेहावायधारणाः" (तत्त्वार्थसूत्रे)।

अवग्रहणमवग्रहः, ईहनमीहा, अवायनमवायः, धारणं धारणेति। सर्व-प्रथममिन्द्रियसंवेदनं जायते यथा कस्यायं ध्वनिरिति प्रथमं न प्रतीयते ध्वनिं श्रुत्वापि, एषावस्था एवावग्रहपदेन गृह्यतेऽवग्रहे केवलं विषयस्य ग्रहणं भवति, तदनन्तरं कस्यायं ध्वनिरिति प्रश्नः समुदेति, एषावस्था ईहापदेनोद्घोष्यते, तत्पश्चान्निश्चयात्मकं ज्ञानं जायते यद्ध्वनिरयमेतस्यैव। एषावस्था अवायशब्दवाच्या, अवायशब्दार्थो निश्चयज्ञानम्, एवंरीत्या प्राप्तं ज्ञानं मनसि धार्यते तस्यैव धारणस्य नाम धारणेति। एषामपि भेदानां बहवः प्रभेदाः सन्ति। तथा चोक्तम्—

"बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवाणां सेतराणाम्" (तत्त्वार्थसूत्रे)। बहुशब्दोऽत्र संख्यावाची वैपुल्यवाची च ज्ञेयः। संख्यावाची यथा—एको द्वौ बहवः। वैपुल्यवाची यथा—बहुः सूप ओदनो बहुः, बहुश्च बहुविधश्च क्षिप्रं चाचिरम्, अनिःसृतश्च असकलपुद्गलः, अनुक्तश्चाभिप्राये स्थितम्, ध्रुवश्च निरन्तरं यथार्थ-ग्रहणम्, बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवाणि तेषां कथंभूतानां सेतराणां प्रतिपक्ष-सहितानाम्। बहूनामवग्रहस्तद्भिन्नस्याल्पस्यावग्रहः, बहुविधस्यावग्रहस्तद्विरोधिन एकविधस्यावग्रहः, क्षिप्रेणावग्रहस्तद्भिन्नेन चिरेणावग्रहः, अनिःसृतस्यावग्रहस्तदन्यस्य निःसृतस्यावग्रहः, अनुक्तस्यावग्रहस्तदितरस्योक्तस्यावग्रहः, ध्रुवस्यावग्रहस्तद्विपरी-तस्याध्रुवस्यावग्रहः। एवंरीत्या द्वादशविधोऽवग्रहो द्वादशविधा ईहा, अवायो द्वादश-विधस्तथा धारणापि द्वादशप्रकारा, सम्मेलनेनाष्टचत्वारिंशद्भेदाः साष्टचत्वारिंशद् षड्भिरिन्द्रियैर्गुणिता अष्टाशीत्यधिका द्विशती भवति। तत्र बहुबहुविधावग्रहादयः षट् प्रकाराः षण्णां प्रभेदाश्च ज्ञानावरणक्षयोपशमप्रकर्षाद् भवन्ति, अल्पैकविधचिरनिः-सृतोक्ता ध्रुवाः षडितरे प्रकारा ज्ञानावरणक्षयोपशमस्याप्रकर्षात् क्षयोपशममात्राद् भवन्ति। द्वितीयं लौकिकज्ञानं श्रुतज्ञानम्। श्रुतज्ञानोत्पत्तिः श्रुताच्छब्दाद् भवति। श्रवणं श्रुतं ज्ञानविशेषः, न तु श्रवणमात्रं यथा पङ्काज्जातं पङ्कजं रूढ्या पद्मं बोधयति न तु मीनादीन् बोधयति। तथा श्रवणं श्रुतमित्युक्ते श्रवणमात्रं न ग्राह्यमपि तु ज्ञान-विशेषो ग्राह्यः। मतिः पूर्वं निमित्तं कारणं यस्य तन्मतिपूर्वम्, पूरयति प्रमाणत्वमिति पूर्वमिति व्युत्पत्तेः।

अथवा मतिः पूर्वोक्तलक्षणा पूर्वा यस्य तन्मतिपूर्वं मतिकारणमिति यावत्। न च कारणस्वरूपं कार्यं भवतीति कारणात् श्रुतज्ञानमपि मतिज्ञानरूपमेवेति वाच्यम् चक्रचीवरदण्डादिकारणको घटो न चक्रचीवरदण्डात्मको भवति, सत्यपि चक्रादौ कारणव्यापारात्प्राग् घटकार्यस्यादर्शनात् कारणात्मकत्वे तु तत्रापि घटो दृश्येतार्थ-क्रियाकारित्वञ्च तत्रावश्यकं भवेत्। सत्यपि मतिज्ञाने चक्षुरादिके बलवच्छ्रुतावरण-कर्मादियुतस्य जीवस्य श्रुतज्ञानाननुभवात्।

श्रुतज्ञानावरणस्य नाशे श्रुतज्ञानमुत्पद्यतेऽतस्तत्र मतिज्ञानं निमित्तमात्रं न तु मत्यात्मकं श्रुतज्ञानमिति। ज्ञानमिदमाप्तवचनात् प्रामाणिकग्रन्थाच्च सम्भवति। आप्तवचनमन्तरा प्रामाणिकग्रन्थावलोकनं विना च श्रुतज्ञानं न सम्भवति। तदर्थ-मिन्द्रियज्ञानमावश्यकम्। तथा च मतिज्ञानं श्रुतज्ञानात् प्रागेव जायते। मतिज्ञानपूर्वकं ज्ञानं श्रुतज्ञानमिति। तथोक्तञ्च—

"श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम्" (तत्त्वार्थसूत्रे)

सर्वज्ञानां तीर्थङ्कराणामुपदेशाज्जायमानं श्रुतज्ञानं सर्वश्रेष्ठं श्रुतज्ञानं जैनदार्शनिकाः कथयन्ति।

अकलङ्कदेवेनापि लघीयस्त्रये श्रुतज्ञानस्वरूपमुपदर्शितम्—

ज्ञानमाद्यं मतिः संज्ञा चिन्ता चाभिनिबोधकम्।<br>
प्राङ्नामयोजनाच्छेषं श्रुतं शब्दानुयोजनात्॥

आगमेषु श्रुतज्ञानं मतिज्ञानञ्च परोक्षत्वेन वर्णितम्। स्मृतिसंज्ञाचिन्ताभि-निबोधज्ञानानि मतिज्ञानान्नातिरिक्तानि। तथा चागमे सामान्यतः स्मृतिप्रत्यभिज्ञा-नतर्कानुमानागमानि ज्ञानानि परोक्षज्ञानत्वेन परिगृहीतानि। इन्द्रियैस्तथा मनसा जायमानं मतिज्ञानं परोक्षज्ञानमित्यङ्गीक्रियमाणे लौकिकविरोधस्य परिहारः कथमिति चेद् यद्यपि मनसेन्द्रियैश्च जायमानं ज्ञानं लोके प्रत्यक्षत्वेन व्यवह्रियते तस्य परोक्ष-त्वेन व्यवह्रियमाणे विरोधः प्रतीयते। तथापि जैनदार्शनिकैराधुनिकैः सांव्यवहारिक-प्रत्यक्षभेदमेकं प्रत्यक्षस्य स्वीकृत्य तल्लक्षणञ्च विधाय तद्विरोधोऽपहृत इति तस्य प्रत्यक्षत्वेन व्यवह्रियमाणेऽपि न काचनापत्तिरिति।

न च मतिज्ञानस्य प्रत्यक्षत्वोपपादनमसङ्गतं तस्य परोक्षत्वादिति वाच्यम्; ज्ञानान्तरनिरपेक्षत्वं वैशद्यं तस्यैव च प्रत्यक्षज्ञानत्वेनाधिकृततयेन्द्रियजन्यस्य मनोजन्यस्य च ज्ञानान्तरनिरपेक्षिततया प्रत्यक्षत्वोपपादनस्य सुसमाधेयत्वात्। इत्थञ्च जैनदर्शने

परोक्षज्ञानमपि प्रत्यक्षज्ञानत्वेन कुत्रचिद् व्यवहर्तुं शक्यमित्यभिनवः पन्थाः प्रकाशितः। स च पन्थाः सहृदयानां मनांस्यावर्जयति, शोभनया युक्त्या सुदृढश्च प्रतिभाति।

## सांख्यमतम्

सांख्यदर्शने १–कश्चिदर्थः प्रमाणं यथा चक्षुरादिः, २–कश्चित्प्रमाप्रमाणोभयरूपो यथा बुद्धिवृत्तिश्चक्षुरादिजन्यत्वेनैषा प्रमा, पौरुषेयबोधं प्रति करणत्वेन च-प्रमाणम्, ३–कश्चित्प्रमैव यथा पौरुषेयो बोधः, ४–कश्चित् प्रमाता एव यथा बुद्धिप्रतिबिम्बितं चैतन्यम्, ५–कश्चिदर्थः साक्षी यथा बुद्धिवृत्त्युपहिता चितिरिति। संशय-विपर्यय-विकल्प स्मृतिरूपबुद्धिवृत्तिभिन्ना बुद्धिवृत्तिः प्रमा, प्रमा ज्ञानञ्चानर्थान्तरम्। प्रमा च द्वेधा—एका अमुख्या, अपरा मुख्या। तत्रेन्द्रियार्थसन्निकर्षजन्या बौद्धप्रमा अमुख्या, बुद्धिवृत्तेः फलं पुरुषवर्त्ती बोधो मुख्या प्रमा "द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा" इति सांख्यसूत्रे प्रमाद्वैविध्यस्य प्रतिपादितत्वात्।

पौरुषेयो बोध इत्यनेन बोधस्य पुरुषवृत्तित्वं न प्रख्याप्यते, येन प्रमातृत्वादि-धर्मेण पुरुषस्य परिणामित्वं संभवेदपि तु बुद्धौ प्रतिबिम्बितत्वेन तत्तादात्म्यापत्त्या पुरुषस्य ज्ञानादिमत्त्वोपचारात् पौरुषेयो बोध इति कथ्यते, एवञ्च बुद्धिपुरुषयोरभेदग्रहात् पुरुषे आरोप्यमाणोऽपि वस्तुतो बुद्धिवृत्त्यात्मक एव बोधो न पुरुष धर्म इति।

अत्र योगभाष्यकाराः कृष्णद्वैपायनाः—"फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः" इन्द्रियप्रणालिकयाऽर्थसन्निकर्षानन्तरं जायमाना योऽयं पट इत्याकारा चित्तवृत्ति स्तद्विषयको योऽहं पटं जानामीत्याकारकोऽनुभवः स प्रमाणभूतायाश्चित्तवृत्तेः फलम्।

स चायमनुभवः पौरुषेयः, चितिचितयोरभेदग्रहात् पुरुषे उपचर्य्यमाणत्वेन पुरुषवर्ती चित्तवृत्त्या सहाविशिष्टो बुद्धिवृत्त्यात्मकः। "बुद्धेः प्रतिसंवेदी पुरुषः" इति संवेदिन्या बुद्धेः प्रतिरूपः, तत्तादात्म्यापन्नत्वेन तत्समानाकारः। बोधस्य बुद्धि-वृत्यात्मकत्वेऽपि यथा पौरुषेयत्वं तथा "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः", "चित्तेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" इत्यादियोगसूत्रतद्भाष्ययोः सम्यङ्निरूपितम्।

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते" इति पञ्चशिखाचार्यवाक्ये च सुस्पष्टम् ।

भोक्तृशक्तिः पुरुषाख्या चितिः, यतः स्वभावतः परिणामरहिता अतोऽप्रतिसंक्रमा सञ्चाररहिता विषयदेशे गमनाभाववती, तथापि परिणामिन्यर्थे बुद्धिरूपे प्रतिसंक्रान्ता प्रतिबिम्बिता सती विषयाकारा बुद्धिवृत्तिमनुपतत्यनुगच्छति प्राप्तचैतन्योपग्रहश्चैतन्यप्रतिबिम्बाख्योपरागो येन रूपेण तत्तथा प्राप्तचैतन्योपग्रहरूपं यस्याः सा तथोक्ता एवम्भूतायास्तस्या बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा बुद्धितादात्म्यमापन्ना सती ज्ञानवृत्तिर्ज्ञानरूपवृत्तिमती प्रमात्रीत्याख्यायते ।

यथा विनापि चन्द्रस्य क्रियामुपसंक्रान्तचन्द्रप्रतिबिम्बममलं जलं स्वयं चलत् सदचलमपि चन्द्रप्रतिबिम्बं चलमिवाभासयति, एवं विनापि चितिव्यापारमुपसंक्रान्तचितिप्रतिबिम्बा बुद्धिरसङ्गतामपि चितिशक्तिं स्वगतया ज्ञानादिक्रियया ऽवभासयन्ती सती प्रमातृभावनामापादयति, वस्तुतस्तु न पुरुषस्य प्रमातृत्वं न वा तन्निष्ठो बोधः फलमिति ।

यथा स्वभावतो गतिशीलमपि जलाशयस्थं जलं निर्गममार्गाभावरूपप्रतिबन्धकबलात् स्वयं क्षेत्रमनुपसर्पदपि सति छिद्रे तद्द्वारा निःसृत्य कुल्यात्मना क्षेत्रमुपसृत्य केदाराकारेण परिणमते, तथा स्वभावतः सर्वार्थग्रहणसमर्थमपि बुद्धितत्त्वं तमसाक्रान्तं सत्स्वयं विषयमनुपसर्पदपीन्द्रियार्थसन्निकर्षादिना तमसो निरासे इन्द्रियप्रणालिकया विषयमुपसृत्य विषयाकारेण परिणमते, इन्द्रियसन्निकर्षद्वारा या तमोऽभिभवसमसमयसत्त्वसमुद्रेकप्रयुक्ता बुद्धेर्विषयाकारपरिणतिः सा अयं पट इत्यादि बौद्धो बोधः प्रत्यक्षप्रमाणं तदनूत्पद्यमानः पटमहं जानामीत्यादिपौरुषेयबोधश्च प्रत्यक्षप्रमेति ।

यथा बीजधराकालसलिलसंयोगादिसन्निधाने उत्पद्यमानोऽप्यङ्कुरो न धराङ्कुरः कालाङ्कुरः सलिलाङ्कुर इति वा व्यवह्रियते, तस्य धरादिधर्मत्वाभावादपि तु व्यवह्रियते बीजाङ्कुरः शाल्यङ्कुरो यवाङ्कुर इति; तस्य बीजधर्मत्वात् तथा बुद्धिविषयेन्द्रियालोकसंयोगादिसन्निधानेनोत्पद्यमानमपि ज्ञानं नेन्द्रियधर्मो विषयधर्म आलोकधर्म इति वा व्यवह्रियते, तज्ज्ञानस्येन्द्रियधर्मत्वाभावादपि तु बुद्धिधर्मत्वेन व्यवह्रियते बुद्धिवृत्तिरिति ।

नन्वन्तःकरणभूताया बुद्धेर्निरवयवत्वेन चेतनवदपरिणामित्वात् कथं विषयाकारपरिणतिशीलता तस्या इति चेन्नाव्यक्तवन्निरवयवत्वेऽपि परिणामित्वोपपत्तेः। अपरिणामित्वे न निरवयवत्वं तन्त्रमपि तु चेतनत्वं तन्त्रमिति विभावनीयम्।

परमार्थतस्तु "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥" इति सांख्यस्मृतेरव्यक्तातिरिक्तस्य सर्वस्य बुद्ध्यादेः सावयवत्वेन मध्यमपरिमाणत्वान्न विषयाकारपरिणत्यनुपपत्तिः। मध्यमपरिमाणत्वेऽप्यतिनिर्मलविरलतैजसद्रव्यत्वेन सूर्यकिरणवत्सत्वरप्रसरोपपत्तेर्न विलम्बेन विप्रकृष्टध्रुवादिविषयपरिणत्यनुपपत्तिश्च। ध्रुवादिविप्रकृष्टविषयपर्यन्तगमनेऽप्यविच्छिन्नमूलसन्तत्यङ्गीकारेणान्तःकरणस्य बुद्धितत्त्वस्य शरीरसम्बन्धसद्भावान्न शरीरस्य निर्जीवतापत्तिः।

एतेनान्तःकरणस्याणुपरिमाणत्वे प्राणनक्रियाश्रयस्य तस्य विप्रकृष्टविषयप्रदेशगमने प्राणस्यापि निर्गतत्वेन तनुपातापत्तिः, तस्य विभुत्वे च निष्क्रियत्वे न वहिर्निर्गमनासंभवेन विषयाकारपरिणत्यनापत्तिस्तस्य मध्यमपरिमाणत्वे च तनुवन्मन्दगामित्वेन झटिति विषयप्रतिभासानुपपत्तिरित्यादिशङ्कापि गर्भस्रावेण गलिता।

ननु चेतनोऽहं जानामि सुखी दुःखी चेति चैतन्यसामानाधिकरण्येन ज्ञानसुखादेरनुभूयमानत्वेन चेतनस्यैव ज्ञानसुखादिमत्त्वोपपत्तेः कथमुक्तं बुद्धेः परिणामविशेषा ज्ञानसुखादय इति चेन्न। "सुखाद्यननुषङ्गी", "असङ्गो ह्ययं पुरुष" इति श्रुतेश्चेतनस्य ज्ञानसुखाद्यनाश्रयत्वबोधनात्। एवञ्च बुद्धावेव प्रमाख्यं फलमुत्पद्यते न पुरुषे तस्यासङ्गत्वेन प्रमाश्रयत्वाभावाद् बुद्धिपुरुषयोरभेदग्रहाच्च पौरुषेयो बोध इत्युपचर्य्यते पौरुषेयत्वं च न पारमार्थिकमपि त्वौपचारिकमिति।

अत्र बुद्धिवृत्तिः पौरुषेयबोधश्चेति प्रमाद्वयाङ्गीकारेऽपि योगभाष्ये पौरुषेयबोधस्य फलत्वाभिधानेन प्रमाद्वयाङ्गीकारो नावश्यक इति बुद्धिवृत्तेः प्रमाणत्वं पौरुषेयबोधस्य च प्रमात्वमङ्गीकर्तव्यम्।

फलत इन्द्रियसन्निकर्षादिनोत्पद्यमानोऽयं पट इत्यादिर्बौद्धो बोधः प्रत्यक्षप्रमाणं तत्पश्चाज्जायमानः पटमहं जानामीत्यादिपौरुषेयो बोधश्च प्रत्यक्षप्रमेति।

## मीमांसामतम्

इन्द्रियसन्निकर्षजन्यं प्रत्यक्षम्। इन्द्रियञ्च वहिरन्तरभेदाद् द्विविधम्। तत्र वहिरिन्द्रियाणि पञ्च तैजसं चक्षुः, आप्यं रसनम्, पार्थिवं घ्राणम्, वायवीयं स्पर्शनम्, आकाशीयं श्रोत्रञ्चेति। अन्तरिन्द्रियमेकं विभु अभौतिकं मनोनामकमिति। तथा चोक्तं मानमेयोदये—

> चक्षुर्नाम कनीनिकान्तरगतं तेजोऽथ जिह्वाग्रग-
> स्तोयांशो रसनं क्षितेरवयवो घ्राणं च घोणोदरे।
> सर्वाङ्गप्रसृताश्च मारुतलवास्त्वङ्नाम कर्णोदर-
> व्योमैव श्रवणं मनस्तु विभु तद्देहे च कार्यावहम्॥

तत्रापि वहिरिन्द्रियेषु चक्षुःश्रोत्रयोः प्राप्यकारित्वे विवादेऽपि तयोरपि त्वगादिवत् प्राप्यकारित्वं कल्पनीयं वहिरिन्द्रियत्वात्। पृथुतरमहीधरादिदर्शनाच्चक्षुषः पृथ्वग्रत्वमपि तेजःप्रकृतिसिद्धं स्वीकरणीयम्। तथा च चक्षुरुन्मीलनसमय एव विप्रकृष्टनक्षत्रादिदर्शनाद् वाह्यालोकेन व्याप्यावस्थितेन चक्षुषस्तेजसो निर्गमनकाल एवैक्यमभ्युपेयम्।

नन्वेवं वाह्यालोकस्य सकलव्यापित्वात् केरलस्थेभ्योऽपि गङ्गादर्शनप्रसक्तिरिति चेन्न, अदृष्टसहकृतालोकभागेनैव चक्षुरालोकस्य ऐक्याङ्गीकारात्। चक्षुरादीनीन्द्रियाणि अतीन्द्रियाणि अनुद्भूतरूपस्पर्शत्वात्, अतो न प्रत्यक्षाणीन्द्रियाणि, अपि त्वनुमानप्रमाणगम्यान्येव।

प्रत्यक्षप्रयोजकः सन्निकर्षो मीमांसकैर्मीमांसादर्शने द्विविधः स्वीकृतः—संयोगः, संयुक्ततादात्म्यञ्चेति। तत्र चक्षुस्त्वगिन्द्रियाभ्यां संयोगसन्निकर्षेण भूजलानलानां प्रत्यक्षम्। त्वचा सह संयोगादनिलस्य ग्रहणम्, दिङ्नभोन्धकाराणां दृक्संयोगात् प्रत्यक्षम्। श्रोत्रसंयोगाच्छब्दस्य ग्रहणम्। मनःसंयोगादात्मनो ग्रहणम्। तत्रापि विभुनोरात्ममनसोः संयोगोऽजन्यसंयोगसाधनात् स्वीकर्तव्यः। जातिगुणकर्मणां प्रत्यक्षं संयुक्ततादात्म्यसन्निकर्षाज्जायते। तथा चोक्तम्—

> रूपादीनां तु संयुक्तद्रव्यतादात्म्यमेव नः।
> प्रतीतिकारणं तस्मान्न सम्बन्धान्तरस्पृहा॥
>
> (मानमेयोदये)

सत्तारूपत्वकर्मत्वादीनां जातिगुणकर्मगतानां ग्रहणं संयुक्ततादात्म्यसन्निकर्षादेव, अथवा रूपत्वादिग्रहणाय तार्किकैर्यथा संयुक्तसमवेतसमवायसन्निकर्षोऽभ्युपेयते, तथास्माभिरपि रूपत्वादिग्रहणाय संयुक्ततादात्म्यतादात्म्यसन्निकर्षः स्वीक्रियते। तथा च मीमांसकनये द्वेधा त्रेधा वा सन्निकर्षोऽङ्गीकृतो नाधिक इति। तथा चोक्तम्—

तत्राद्यं त्रिविधं तावन्नाममात्रेण भिद्यते।
समवायादयस्त्वन्ये सन्निकर्षा निराश्रयाः॥

मीमांसकमते शब्दस्य श्रोत्रगुणत्वाभावात् समवायसमवेतसमवायौ सन्निकर्षौ तार्किकाभिप्रेतौ निरर्थकौ। अभावस्याप्रत्यक्षत्वात्, समवायस्य च कमठीस्तनायितत्वाद् विशेष्यविशेषणभावोऽपि तार्किकसंमतः सन्निकर्षो व्यर्थ एव।

किञ्च, दण्डी पुरुष इत्यादौ सम्बन्धान्तरपूर्वकस्यैव विशेष्यविशेषणभावस्यानुभूयमानत्वादभावसमवाययोश्चार्थेन सम्बन्धान्तराभावादभावसमवाययोर्विशेष्यविशेषणभावसन्निकर्षश्चक्षुः संयुक्तार्थेनासम्भव एव।

बहिरिन्द्रियसन्निकर्षजन्यमन्तरिन्द्रियसन्निकर्षजन्यं पूर्वोक्तं चाक्षुषादिमानसान्तं षड्विधमपि प्रत्यक्षं पुनर्द्विविधं निर्विकल्पकं सविकल्पकञ्चेति। निर्विकल्पकप्रत्यक्षम्—

इन्द्रियसन्निकर्षानन्तरमेव द्रव्यादिस्वरूपमात्रावगाहि शब्दानुगमशून्यं संमुग्धज्ञानं यज्जायते तद् विशिष्टकल्पनाभावान्निर्विकल्पकम्। ननु—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

इत्यादिवचनैर्निर्विकल्पकज्ञानस्यास्तित्वं गन्धर्वनगरोपममिति चेन्न, पूर्वमर्थदर्शनाभावे शब्दस्मरणस्य हेत्वभावप्रसङ्गात्।

निर्विकल्पकानन्तरं शब्दस्मरणसहकृतं जात्यादिविशिष्टवस्तुविषयं रक्तोऽयं घटोऽयमित्याद्याकारकव्यक्तविज्ञानं सविकल्पकमिति। ननु सविकल्पकज्ञानस्यालीकत्वं प्रमाणाभावादिति चेन्न, लोकसिद्धस्य प्रत्यक्षतया तस्यानस्तित्वे लोकविरोधात्। तथा चोक्तं मानमेयोदये—

चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ।
स एव सविकल्पस्य प्रत्यक्षत्वं निवारयेत् ॥

किञ्च, सविकल्पकज्ञानानन्तरमेवार्थक्रियायाः साफल्यदर्शनादर्थक्रियाकारित्वरूपं प्रमाणत्वं तत्र सुस्थमेव । एवञ्च प्रत्यक्षत्वेन प्रमाणत्वेन च सविकल्पकस्यास्तित्वे न कश्चन सन्देहावसरः । ननु सविकल्पकस्य अर्थक्रियाकारित्वं न स्वाभाविकमपि तु दैवागतमेव ( परम्परयैव ) अर्थतोऽतिविप्रकर्षाभावात् । तथा चोक्तम्—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥
( मानमेयोदये )

किञ्च, अवस्तुभूतसामान्यादिविषयत्वाद् विकल्पस्य मिथ्यात्वेन तन्मूलकसविकल्पकस्यास्तित्वं सरीसृपश्रवणायितमेवेति चेन्न, अनुमानविकल्पस्याप्यप्रमाण्यापातात् सामान्यादेर्वस्तुत्वस्यानेकसाधनैः साधयिष्यमाणत्वाच्च । तथा च सविल्पकस्य प्रत्यक्षप्रमाणत्वं सुतरां सुसमाहितमेव ।

नन्वेवमपि निर्विकल्पकज्ञानेन व्यवहिततया साक्षादिन्द्रियसन्निकर्षजत्वाभावात् सविकल्पकस्य प्रत्यक्षपदवाच्यत्वं दुर्घटमेव । परम्परयेन्द्रियसन्निकर्षजस्य प्रत्यक्षत्वे चानुमानादीनामपि प्रत्यक्षत्वप्रसक्तिरिति चेन्न, निर्विकल्पकवत् सविकल्पकस्यापि साक्षादिन्द्रियस्य सन्निकर्षजत्वात् । तथा चोक्तम्—

ताश्चेन्द्रियानुसारेण जायन्ते पञ्च कल्पनाः ॥
यदि त्वालोच्य संमीलय नेत्रे कश्चिद् विकल्पयेत् ।
प्रत्यक्षं नैव मन्यन्ते तल्लौकिकपरीक्षकाः ॥ इति ।

किञ्च, सविकल्पकस्य परम्परयेन्द्रियसन्निकर्षजत्वेऽपि पङ्कजादिवद् योगरूढौ स्वीकृतायां प्रत्यक्षशब्दस्येन्द्रियसन्निकर्षजापरोक्षबुद्धिबोधकत्वादनुमानादीनाञ्च परोक्षबुद्धित्वात् प्रत्यक्षलक्षणस्य तत्रानतिप्रसक्तेरदोषाच्च ।

सविकल्पकघटकीभूतो विकल्पो द्रव्यजातिगुणकर्मनामभिः पञ्चभिः पञ्चविधः । पञ्चानां सविल्पकानामुदाहरणानि क्रमेण वेणुमानयं गोपोऽयं श्यामोऽयं गायत्ययं गोविन्दोऽयमिति ।

प्रत्यभिज्ञाप्रत्यक्षमपि विकल्पोऽपरो गणनीयतामर्हतीति न वाच्यम्, नामकल्पनायामेव तस्यान्तर्भावात्। यतो हि पूर्वमनुभवविषयीभूतरूपे स्मरणविषयताश्रये सति तद्रूपविशिष्टतया वस्तुनो कल्पना नामकल्पनेति व्यपदिश्यते, तेन गोविन्दोऽयमित्यस्यायमभिप्रायः—योऽस्माभिरसौ गोविन्दपदशक्यतया पूर्वं बुद्धः स एवायमिति। यदा तु पदशक्यत्वमन्तरैव पूर्वापररूपयोरैक्यावगतिरेव तात्पर्यं तदा स एवायमिति प्रत्यभिज्ञा सुस्पष्टा प्रतिभासते। एतादृशी च प्रत्यभिज्ञा संस्कारसहकृतेनेन्द्रियेणैकबुद्धित्वेन जन्यते। तथा च स इति, अयमिति च भाने द्वे जन्येते। तत्र संस्कारजा स इति भानजननशक्तिरक्षजा चायमिति भानजननशक्तिः।

तथा च प्रत्यक्षज्ञानेषु विवक्षाविविधतयेन्द्रियस्य तत्सन्निकर्षस्य ज्ञानस्य वा करणता भवतीतीन्द्रियसन्निकर्षजं प्रमाणं प्रत्यक्षमिति सुसम्पन्नम्।

प्रभाकरमते तु—

साक्षात्प्रतीतिः प्रत्यक्षम्। तच्च मेयमातृप्रमास्वरूपमिति। इन्द्रियसन्निकर्षजत्वाभावेऽपि भूतभविष्यदादिविषयकं योगिज्ञानमीश्वरज्ञानञ्च प्रत्यक्षमिति तत्साधारणं ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्यादि प्रत्यक्षस्य लक्षणं तार्किकाणामसङ्गतमेव, प्रत्यक्षस्य विद्यमानोपलम्भनियमाद् भूतादीनामपरोक्षत्वस्यानुपपत्तेः। तस्मादिन्द्रियसन्निकर्षजं ज्ञानमपरोक्षमेव प्रत्यक्षमिति मीमांसकानां विमलः पेशलश्च पन्थाः। तथा चोक्तम्—

इन्द्रियव्यतिरिक्तानि द्रव्याण्येषां च जातयः।
प्रायश्च गुणकर्माणि प्रत्यक्षाणीति मन्यते॥

## वेदान्तमतम्

प्रमाणायत्तप्रमेयज्ञानमिति प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम्। करणं प्रमाणमित्युच्यमाने छिदादिकरणे कुठारादावतिव्याप्तिस्तद्वारणाय ज्ञानार्थकमापदम्। दुष्टनेत्रादेर्भ्रमकरणत्वात्तादृशनेत्रादावतिव्याप्तिरतस्तद्वारणाय प्रकर्षबोधकप्रपदम्। ज्ञाने प्रकर्षत्वञ्च याथार्थ्यमेव नान्यत्। प्रमा प्रमाणमित्युक्तौ चक्षुरादाव्याप्तिः प्रमाणात्मकप्रमायामतिव्याप्तिश्च।

तत्र प्रमात्वम् अनधिगताबाधितार्थविषयकज्ञानत्वम्। स्मृतिसाधारणप्रमात्वं त्वबाधितार्थविषयकज्ञानत्वम्। ननु यत्रैकस्मिन् घटे प्रत्यक्षे प्रत्यक्षधारा प्रवर्तते, तदा तत्र द्वितीयादिप्रत्यक्षेऽव्याप्तिस्तद्विषयस्य प्रत्यक्षेण गृहीतत्वाद् इति चेन्न, रूपरहित-

स्यापि समयस्येदानीं घटो वर्तत इत्यादिप्रतीतिमहिम्ना चाक्षुषत्वाभ्युपगमेन धारावाहिकज्ञानस्यापि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविशिष्टविषयकत्वेनाव्याप्तेरनवकाशात्।

वस्तुतस्तु वेदान्तसिद्धान्ते धारावाहिकज्ञानस्थलेऽनेकानि ज्ञानानि न भवन्ति। किन्तु यावद् घटस्फुरणं घटाकारान्तःकरणवृत्तिः स्वविरोधिवृत्त्युत्पत्तिपर्यन्तमेकैव तिष्ठति, तत्प्रतिफलितचैतन्यात्मकघटादिज्ञानमप्येकमेवेति नोक्तदोषावसरः। न च घटादेर्मिथ्यात्वेन बाधितत्वादबाधितार्थविषयकत्वाभावाद् घटज्ञानं कथं प्रमेति वाच्यम्, ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः। प्रमालक्षणे चाबाधितपदेन संसाराबाधितत्वस्य विवक्षितत्वात्। तथा चोक्तम्—

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥

अत्र आत्मनिश्चयोऽखण्डब्रह्मात्मसाक्षात्कारः। प्रमाणानि व्यवहारे भट्टनयस्वीकारेण प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदेन षट्। प्रत्यक्षप्रमाणं तत्र प्रत्यक्षप्रमायाः करणम्। प्रत्यक्षप्रमा च चैतन्यमेव, "यत्साक्षादपरोक्षात्" इत्युक्तेः। अपरोक्षादित्यपरोक्षमित्यर्थः। प्रत्यक्षशब्दो हि चक्षुरादीन्द्रिये तत्प्रभवे ज्ञाने तद्ग्राह्ये घटादौ च प्रवर्तते। तत्र चक्षुरादिगतं प्रत्यक्षत्वमर्थसन्निकृष्टेन्द्रियत्वम्। ज्ञानगतं चार्थविशिष्टवृत्त्यवच्छिन्नचैतन्यत्वं वै० स्वाकारत्वस्वसमानदेशस्थत्वाभ्याम्।

तथाहि—चक्षुरादिद्वारान्तःकरणं घटादिदेशं गत्वा चक्षुरादिसंयुक्तघटाद्याकारेण परिणमते, घटाद्याकारः परिणाम एव तदीया वृत्तिः, सा घटाद्याकारतया घटादिसमानदेशस्थतया चार्थविशिष्टा तदवच्छिन्नं चैतन्यं प्रत्यक्षज्ञानम्।

विषयगतं प्रत्यक्षत्वञ्च प्रमातृसत्तातिरिक्तसत्ताशून्यत्वम्। तथा च प्रत्यक्षस्थलेऽन्तःकरणस्य तद्वृत्तिविषयस्य च समानदेशस्थत्वेन तत्तदवच्छिन्नचैतन्यस्यैक्यम्, उपाधीनां भिन्नदेशस्थत्वस्यैवोपधेयभेदकत्वात्, अन्तःकरणावच्छिन्नचैतन्यं प्रमाता, वृत्त्यवच्छिन्नचैतन्यं प्रमा, घटाद्यवच्छिन्नचैतन्यं प्रमेयम्। तत्रान्तःकरणवृत्तिविषयाणामेकदेशस्थतया तदवच्छिन्नचैतन्येष्वभेदेन प्रमातृसत्तातिरिक्तसत्ताशून्यत्वस्य घटादौ सूपपन्नत्वात्।

ननूक्ततादृशवृत्त्यवच्छिन्नचैतन्यमेव प्रमाचैतन्यं तच्चानादि। तत्कथं तत्करणत्वेन चक्षुरादेः प्रमाणत्वमिति चेत्? चैतन्यस्यानादित्वेऽपीन्द्रियसन्निकर्षादिना चैतन्याभिव्यञ्जकान्तःकरणवृत्तिर्वृत्तिविशिष्टञ्च चैतन्यमादिमदिति व्यवह्रियते, चैतन्यस्य स्वरूपतोऽनादित्वेनेन्द्रियाजन्यत्वेऽपि वृत्तिविशिष्टचैतन्यमिन्द्रियजन्यं तदेव च घटादिप्रत्यक्षप्रमेति न दोषः।

ननु वृत्तौ ज्ञानव्यवहारावलोकनात् स्वरूपेणेन्द्रियजन्यत्वाच्च सैव प्रत्यक्षप्रमा न वृत्तिविशिष्टं चैतन्यमिति चेन्न, "सत्यं ज्ञानम्" इत्यादिश्रुत्या तस्यैव मुख्यज्ञानत्वावगमात्, जडान्तःकरणकर्मत्वेन वृत्तेर्जडत्वाद् ज्ञानव्यवहारस्य च तत्र भाक्तत्वेनाप्युपपत्तेश्च। तदुक्तं विवरणे--"अन्तःकरणवृत्तौ ज्ञानत्वोपचारात्" इति।

नन्ववयवहीनस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथं स्यादिति तु नाशङ्कनीयम् "तन्मनोऽसृजत" इत्यादिश्रुतेः सादिद्रव्यत्वेन सावयवत्वात्तद्वृत्तेः सूपपन्नत्वात्।

"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतिघटकधीपदेन वृत्तिरूपज्ञानाभिधानेन वृत्तिरूपज्ञानस्य मनोधर्मत्वे न कश्चन सन्देहावसरः।

अत एव च कामादीनामपि मनोधर्मत्वं ज्ञेयम्। न चाहमिच्छाम्यहं जानाम्यहं बिभेमीत्याद्यनुभव आत्मधर्मत्वमवगाहत इति कामादीनामन्तःकरणधर्मत्वं न वर्तत इति वाच्यम्, अयःपिण्डस्य दहनकर्तृत्वाभावेऽपि दहनकर्तृत्वाश्रयाग्नितादात्म्याध्यासाद् अयो दहतीति व्यवहारवत् सुखाद्याकारपरिणाम्यन्तःकरणेन सहात्मनस्तादात्म्याध्यासादहं सुखी दुःखीत्यादिव्यवहारस्यात्मनि सम्भवात्।

नन्वात्माहङ्कारयोर्भेदेऽप्यहङ्कारविशिष्टस्यात्मनोऽपरोक्षाहंप्रत्ययविषयत्वे विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वनियमादहङ्कारस्यापि प्रत्यक्षविषयत्वमभ्युपेयम्, तच्च तस्येन्द्रियत्वेनातीन्द्रियंतया दुर्घटमिति चेन्न, अन्तःकरणस्येन्द्रियत्वबोधकप्रमाणाभावात्; अपि तु--

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
त्रिविधोऽयमहङ्कारो महत्तत्त्वाद्धि जायते।
इन्द्रियाणां ततः सृष्टिर्गुणद्वारा महामुने॥

इत्यादिश्रुतिस्मृतिवचनैर्मनसोऽनिन्द्रियत्वावबोधनात्।

न चैवं मनसोऽनिन्द्रियत्वे इन्द्रियाजन्यत्वात् सुखादिप्रत्यक्षस्य साक्षात्कारत्वं न स्यादिति वाच्यम्, ज्ञानस्य साक्षात्त्वे इन्द्रियजन्यत्वस्यातन्त्रत्वात्। अन्यथा मनोजन्यतयानुमित्यादेरपि साक्षात्त्वापत्तेरनिन्द्रियजन्यस्येश्वरज्ञानस्य साक्षात्त्वानापत्तेश्च।

नन्वन्तःकरणमनिन्द्रियत्वेनास्तु प्रत्यक्षविषयस्तथाप्यान्तरस्य तस्य कथं बहिष्ठविषयाकारपरिणामः? अन्तःकरणस्य बहिर्गमनमसम्भवम्, यतो ह्यन्तःकरणं यद्यणुपरिमाणं बहिर्गच्छतीति चाभ्युपगम्येत, तदा तस्यैव प्राणनक्रियाश्रयतया विप्रकृष्टध्रुवादिपर्यन्तं तस्य गमने तदवच्छिन्नजीवस्यापि बहिर्गतत्वेन देहस्य निर्जीवत्वापत्तिर्विभुत्वे निष्क्रियत्वेन तदीयबहिर्गमनस्य सुतरामसम्भवः, मध्यमपरिमाणत्वे देहानुरूपपरिमाणतया देहवन्मन्दगामित्वेन झटिति विषयप्रतीत्यनुपपत्तिः। किञ्च, चक्षुरादिसंयोगसहकृतेनाधिष्ठानचैतन्येनैव घटादेः स्फुरणोपपत्तावन्तःकरणवृत्तिवैफल्यमतोऽन्तःकरणवृत्त्यवच्छिन्नं प्रमाणचैतन्यमिति नोचितमिति चेदत्रोच्यते—मनो मध्यमपरिमाणमेव न सर्वगतम्, अनित्यत्वात्, प्राणनशक्त्याश्रयस्य तस्योत्क्रान्तिगत्यादिश्रवणाच्च।

न चाणुदेहव्यापि सुखाद्युपलब्धेः। न चान्तरस्य तस्य बहिर्निगमनाभावान्न वृत्त्युपादानत्वं स्वतो बहिर्निगमनाभावेऽपि चक्षुरादिद्वारा ध्रुवादिविषयदेशगमनोपपत्तेः, न च स्वतो गतिशीलस्य सहायानपेक्षेति वाच्यम्, जलाशयोदकस्य कुल्याद्वारैव केदारप्रवेशदर्शनात्।

न चास्य मध्यमपरिमाणत्वे झटिति ध्रुवादिप्रतीत्यनुपपत्तिरतिस्वच्छविरलतैजसद्रव्यत्वेन सूर्यकिरणवच्छीघ्रप्रसरोपपत्तेस्तद्वृत्तिश्च विषयानुकूलपरिमाणा जलाशयोदके चतुष्कोणकेदारानुरूपपरिमाणस्य वह्नौ चायःपिण्डपरिमाणस्यावलोकनेनान्तःकरणस्य विषयानुरूपपरिमाणवृत्तिजनकत्वात्। अत एव वृत्तिर्द्रव्यं न गुणः, परिमाणवत्त्वात्।

न चान्तःकरणस्य निःस्पर्शत्वादनारम्भकत्वं द्रव्यस्यारम्भकत्वे सावयवत्वस्यैव प्रयोजकत्वात्। न चान्तःकरणस्य बहिर्निगमने देहस्य निर्जीवत्वं चक्षुरादेरिवान्तःकरणस्य ध्रुवादिपर्यन्तगमनेऽपि देहसम्बन्धस्याविच्छेदात्।

अनुमित्यादिकालेऽन्तःकरणस्य न वह्न्यादिदेशे गमनं वह्न्यादिना सह चक्षुरादीनां सन्निकर्षाभावात्। तथा चायं घट इति प्रत्यक्षे घटादेस्तदाकारवृत्तेश्चैकत्र देशे बहिः समवधानात्तदुभयावच्छिन्नं चैतन्यमेकमेव, विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वाद् विभिन्नदेशस्थितानामेवोपाधीनामुपधेयभेदकत्वात्। अत एव गेहस्थघटावच्छिन्नाकाशो न गेहावच्छिन्नाकाशाद्भिन्नः।

तथा चायं घट इति प्रत्यक्षकाले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य चाव्यभिचारेणैकदेशस्थितोपाधिद्वयावच्छिन्नत्वादव्यभिचारेणाहं सुखी दुःखीत्यादिप्रमायाः प्रत्यक्षता।

ननु सुखादिप्रत्यक्षस्थले चक्षुरादिसन्निकर्षस्यान्तःकरणवृत्तिहेतोरभावेन सुखाद्याकारवृत्त्यनुदयाच्चैतन्यस्य सुखाद्यंशे प्रत्यक्षत्वं न स्यादिति चेन्न, बाह्यविषयवृत्तावेवेन्द्रियसन्निकर्षस्यापेक्षणात् सुखादिवृत्तेस्तु स्वत एव जायमानत्वाच्च।

न चैवमपि स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति वाच्यम्, स्मर्यमाणसुखादेरतीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्तमानत्वेनोपाध्योर्भिन्नकालिकत्वेन तत्तदवच्छिन्नचैतन्ययोर्भेदादुपाध्योरेकदेशस्थयोरेककालिकयोरेवोपधेयाभेदप्रयोजकत्वात्।

ननूपाध्योरेककालिकत्वं नोपधेयाभेदप्रयोजकं भिन्नकालिकयोरेकदेशस्थयोर्घटमठयोर्भेदकत्वप्रसङ्गात्। न चोपधेयभेदकाले तयोः समकालत्वं विवक्षितमिति वाच्यम्, उपधेयाभेदसिद्धावेककालिकोपाधिद्वयावच्छेदस्तस्माच्चोपधेयाभेद इत्यन्योन्याश्रयत्वाल्लाघवेनैकदेशस्थत्वस्यैवाभेदप्रयोजकत्वाच्च। एकदेशस्थत्वमात्रस्योपधेयप्रयोजकत्वे पूर्वमहं सुखीत्यादिस्मृतावतिव्याप्तिः, अतस्तन्निवृत्तये वर्तमानत्वं विषयविशेषणं देयम्। तथा च स्मर्य्यमाणसुखादेरवर्तमानत्वेन तद्वृत्त्यवच्छिन्नचैतन्यस्य वर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वरूपलक्षणाभावान्नातिव्याप्तिः।

नन्वेवमपि धार्मिको भवान्, अधार्मिकस्त्वमित्यादिवाक्यजन्यवृत्त्यवच्छिन्नचैतन्यं प्रति धर्माधर्मयोर्वर्तमानत्वेनोपाधितया तस्य तदुपहितचैतन्याभिन्नतया तादृशशाब्दबोधेऽतिव्याप्तिरहमदृष्टवान् भोगवत्त्वादित्यनुमानजन्यज्ञाने चातिव्याप्ति-

रिति चेन्न, योग्यविषयावच्छिन्नचैतन्यप्रमाणचैतन्ययोरभेदस्य विषयांशे प्रत्यक्षत्व-प्रयोजकत्वेन विवक्षितत्वात्, धर्मादिज्ञाने चायोग्यविषयत्वाद्तिव्याप्तेरनवकाशात्।

न चैवमपि सुखस्य वर्तमानत्वे त्वं सुखीत्यादिवाक्यज्ञानजन्यस्य तादृश-चैतन्याभिन्नतया तादृशशाब्देऽतिव्याप्तिः, न च पदज्ञानपदार्थस्मरणादिना सुखस्य विनाश्यत्वाच्छाब्दज्ञानकाले तन्निवर्तत इति वाच्यम्, चन्दनादिविषयजन्यसुखस्य यावद्विषयमनुवर्तमानत्वाभ्युपगमादिति वाच्यम्, तस्यापि प्रत्यक्षज्ञानत्वेन लक्ष्य-त्वादिष्टापत्तेः।

ननु सुखादेर्धर्मादेश्चान्तःकरणधर्मत्वाविशेषात् कस्यचिद् योग्यत्वं कस्यचिन्न योग्यत्वमित्यत्र नियामकाभाव इति चेन्न, केषुचित् पदार्थेषु प्रत्यक्षरूपकार्यसत्त्वा-सत्त्वाभ्यां कल्प्यमानत्वात् फलबलकल्प्यस्वभावस्य नियामकत्वानङ्गीकारे तार्किक-मतेऽप्यात्मधर्मत्वाविशेषात् सुखादिवद् धर्मादेरपि प्रत्यक्षत्वापत्तिः सुनिश्चिता स्यात्।

ननु तत्त्वमसि त्वं सुखीत्यादिवाक्यजन्यज्ञानस्येन्द्रियाजन्यत्वेऽपि योग्यवर्त-मानविषयत्वमात्रेण प्रत्यक्षत्वाभ्युपगतौ शैलो वह्निमानित्याद्यनुमितेरपि प्रत्यक्षत्वा-पत्तिरिति चेन्न, विषयचैतन्याभिन्नज्ञानस्य योग्यवर्तमानविषयस्य प्रत्यक्षत्वाभ्युप-गमात् पर्वतांशे प्रत्यक्षत्वस्येष्टत्वात्, शैलावच्छिन्नचैतन्यस्य वहिर्निर्गतान्तःकरणवृत्त्य-वच्छिन्नचैतन्यस्य च परस्परभेदात्, वह्न्यंशेऽन्तःकरणवृत्तेर्निःसरणाभावेन वह्न्यव-च्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात् परोक्षत्वस्याङ्गीक्रियमाणत्वात्।

कुत्रचिदंशे प्रत्यक्षत्वस्य कुत्रचिदंशे परोक्षत्वस्य स्वीकृतावेव शैलं पश्यामि वह्निमनुमिनोमीत्यनुभवः सम्पन्नो भवति। शैलांशेऽप्यनुमितिरिति वदतो नैयायिकस्य मते शैलमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्टपक्षकानुमानस्थलेऽग्न्यंश इव तदितरसर्वांशेऽपि तज्ज्ञानं परोक्षम्।

(सावशेषम्)



# ग्रन्थसमालोचनम्

**सामविधानब्राह्मणम्**—श्रीसायणाचार्यकृतवेदार्थप्रकाशेन श्रीभरतस्वामिकृतपदार्थमात्र-विवृत्या च समन्वितम्। केन्द्रीयसंस्कृतविद्यापीठनिदेशकेन डा० बे० रामचन्द्रशर्मणा पाठभेदादिभिः संशोध्य प्रकाशितम्। तिरुपतिस्थकेन्द्रीयविद्यापीठग्रन्थमालायां प्रथमप्रकाशनरूपेण प्रकटीकृतम्।

सामवेदीयब्राह्मणग्रन्थेषु बहुषु प्रायश्चित्तादिनानाविधानुष्ठानप्रतिपादकत्वेन तत्तद्विधिषु समुचितसाममन्त्र-सामगानानां च नियोजकत्वेन जागर्ति किमपि माहात्म्यं सामविधानेत्याख्यया ख्यातस्यैतस्य ब्राह्मणग्रन्थस्य। वैदिकमन्त्राणामुपयोग आध्यात्मिकशक्तिसम्पत्तिलाभाय यथा बहुशो विधीयते, तद्वद् व्यावहारिकफलसम्पादनायापि तेषामुपयोगोऽनेकशः क्रियते तज्ज्ञैर्वेदविद्भिः। ऋङ्मन्त्राणां कृते ऋग्विधानग्रन्थ इव यजुर्मन्त्राणां कृते यजुर्विधानग्रन्थ इव एष ग्रन्थः सामवेदस्थमन्त्राणां सामगानानां च सम्यक् प्रयोगाय स्वमहिमानं नूनमाविष्करोति। पुराणेषु निर्दिष्टा अलौकिकचमत्कारविधायिन्यः सिद्धयो यथा समुल्लसन्ति तद्वत् तासां साक्षात्कार एतादृक्षु ग्रन्थेषु समुपलभ्यमानो नूनमध्यात्मशास्त्रवेतॄणां हृदयमावर्जयति।

केन्द्रीयसंस्कृतविद्यापीठतिरुपतितः प्रकाशितं सामविधानब्राह्मणमेतन्न केवलं ग्रन्थस्या-प्राप्यतां निवारयति, अपि तु पूर्वप्रकाशितसंस्करणानाम् (अधुनाऽप्राप्यमाणानाम्) अनुसन्धान-पर्यालोचनाभावदोषमपि निराकरोति। सायणभाष्येण सह तत्पूर्ववर्तिभरतस्वामिभाष्यस्यापि (अद्यावध्यप्रकाशितस्य) प्रकाशनं कृतम्। एतत्सम्पादकेनोक्तविद्यापीठसंचालक—डाक्टर बी० आर०शर्मणाऽऽधुनिकानुसन्धानपद्धत्या प्रकाशिताप्रकाशितपुस्तकानि सम्यगालोच्य पाठान्तर-निर्देशपूर्वकं ब्राह्मणस्य भाष्यद्वयस्य च मण्डनमांग्लभाषाभूमिकयाऽनुक्रमणीभिश्च कृतम्। विद्या-पीठाध्यक्षेण विदुषा डाक्टर वी०राघवनमहोदयेनापि पुरःस्थापनशब्दैः ग्रन्थस्य महत्त्वं बृंहितम्। आलोचनात्मकटिप्पणी, सामविधानोक्तमन्त्राणामनुक्रमणिका, मन्त्रवर्गाणामप्यनु-क्रमणिका, सामगानानां तत्फलानां चानुसूची, मन्त्रेतरोद्धरणानां (ब्राह्मणे भाष्येऽपि च प्राप्याणाम्) अनुक्रमणी, विशेषशब्दानां भाष्यकारद्वयकृतानामर्थानामनुक्रमेणोल्लेखः, शब्दानुक्रमणिका, अन्ते मुद्रणस्य शुद्धिपत्रमित्येते विषयाः सम्पादकस्य श्रमम्, ग्रन्थस्य महत्त्वम्, अनुसन्धानार्थं तस्योप-योगितां च दर्शयन्ति।

ग्रन्थस्यास्य संशोधने नानोपयोगिनीभिष्टिप्पणीभिश्च सनाथीकरणे सम्पादकवर्याणां श्रीरामचन्द्रशर्मणां भूयांसं परिश्रमं विवेचनरीतिं च भृशं संस्तुमः। यत्र कुत्रापि विद्यमाना अपि काश्चित् त्रुटयो ग्रन्थस्यैतस्य महिमानं विहन्तुं नेशन्त इति वक्तुं नूनं पारयामः। २७३–२७५ अङ्कितेषु पृष्ठेषु केषाञ्चन नवीनानां शब्दानां कोशादिष्वनुल्लिखिता अर्थाष्टीकाद्वयस्य साहाय्याद् निर्दिष्टा इति तु नितान्तं शोभनं वर्तते, परन्त्वत्र शब्दचयने त्रुटिरवलोक्यते। सङ्कर, सङ्करेवासिनी, (३।४।२), पुष्पान्त (३।८।५)—आदिशब्दा अप्यर्थतोऽनिर्देश्याः सन्ति।

भरतस्वामिनो भाष्यं सायणभाष्यतः प्राचीनमिति सम्पादकेन प्रतिपादितमेव वर्तते (भूमिकायां दशम पृष्ठे)। तत्तु संक्षिप्तमप्यस्ति। अत एव तस्य स्थानं (प्रकाशने) सायणभाष्यतः पूर्वमेव समीचीनं प्रतिभाति; परन्तु ग्रन्थेऽस्मिन् सायणभाष्यानन्तरमेव भरतस्वामिभाष्यस्य स्थितिर्नास्मभ्यं रोचते। अनुक्रमणिकादिषु पृष्ठसंख्यानिर्देश आंग्लाङ्के समीचीनो न प्रतिभाति; मूलग्रन्थे तु देवनागर्यङ्कप्रयोगो वर्तते। अन्यत्रापि (यथा मूलग्रन्थे मन्त्रनिर्देशनार्थम्) आंग्लाङ्का नोचिताः। आंग्लभाषाभूमिकया सह संस्कृतभाषाभूमिकाऽप्यपेक्षिताऽऽसीद् आंग्लभाषानभिज्ञानां संस्कृतज्ञानां भृशं लाभाय।

सतीष्वेतासु त्रुटिषु नातिस्वल्पपरिश्रमेण सम्पादितोऽयं ग्रन्थः सर्वथा स्वागतार्हः संग्रहणीयश्च। एतदर्थं सम्पादकमहानुभागा डा०रामचन्द्रशर्माणः समेषां सामान्यतः संस्कृतज्ञानां विशेषतो वेदज्ञानां प्रभूतान् धन्यवादानर्हन्ति। न चिरादेव तैरन्येषामपि सामवेदीयब्राह्मणानामालोचनात्मकं विशुद्धं संस्करणं प्रकाशयितुं सावधानेन मनसा चेष्टिष्यत इत्याशास्य विरमत्ययं जनः॥

**बलदेव उपाध्यायः,**

**संचालकोऽनुसन्धानसंस्थानस्य।**

---

**मलमासनिर्णयः सटिप्पणः,** श्रीदरबारीझाशर्मणा विरचितः। प्रकाशिका—बेतियाराजगुरु–स्व०जगन्मोहनव्यासस्य धर्मपत्नी। मूल्यम्—२.५०

विहारराज्यान्तर्गतमोदफलपुरमण्डलान्तःपाति–बेङ्गाही–ग्रामवासिना ज्यौतिषसाहित्ययोराचार्येण चम्पारण्यमण्डलान्तर्गतबेतियाराजसंस्कृतोच्चविद्यालयाध्यापकेन झोपाख्यमैथिलपण्डितश्रीदरबारिशर्मणा विरचितः प्रायः शतद्वयपृष्ठपरिमितः (डबल क्राउन) एष सटिप्पणो मलमासनिर्णयः। अत्र सौरचान्द्रसावननाक्षत्रमानानां प्रयोजनं विशदविवेचनपुरस्सरं सप्रमाणमभिहितम्। तत्रापि चान्द्रमासविवेचनमतीवोपयुक्तं प्रतिभाति। अधिमासक्षयमासविचारप्रसङ्गे तत्तन्मासपरिभाषापूर्वकं विचारः प्रस्तुतः, अन्ये च पक्षयोर्मुख्यत्वगौणत्वप्रभृतयो विषया विवेचिताः।

सत्स्वपि मलमासनिर्णायकेष्वनेकेषु धर्मशास्त्रनिबन्धेषु नूतनस्यास्य ग्रन्थस्य निर्माणे प्रवृत्तिः कालमाधवकर्तुर्माधवाचार्यस्य तदनुयायिनां द्वैतपरिशिष्टकारवाचस्पतिमिश्रप्रभृतीनां च गणितानभिज्ञताप्रयुक्ताः काश्चन त्रुटीः परिमार्जयितुमिति ग्रन्थकारो भूमिकायां लिखति। तत्र वर्तमानकाले भास्कराचार्योक्तम्—"क्षयः कार्तिकादित्रये नान्यतः स्यात्" इति क्षयमासलक्षणं स्वीकृत्य कमलाकरभट्टकृतखण्डनं वर्तमानकालेऽनुपयुक्तमिति यत् प्रतिपादितं तत् समुचितमिव प्रतिभाति। परन्तु क्षयमासपूर्ववर्तिनोऽधिमासस्य माधवाचार्यप्रभृतिभिरनेकैर्धर्मशास्त्रनिबन्धकारैः प्राकृतत्वं प्रतिपादितम्। तस्य खण्डनमत्र ग्रन्थे यत्र तत्र गणितदृष्ट्या कृतमस्ति। तद्यथा—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा।
घटिकानां चतुष्केण पतति ह्यधिमासकः॥

इत्यादिसिद्धान्तज्यौतिषवचनदृष्ट्या प्रथमस्याऽधिमासत्वं प्रतिपाद्य तस्य कर्मानर्हत्वं साधितम्। अत्र शास्त्रदर्शितकालान्तरे समागतस्याधिमासत्वं तस्य कर्मानर्हत्वं च युक्तम्, परन्तु परिस्थितिविशेषे क्षयमाससम्बन्धेन समागताधिमासस्य, अर्थात् क्षयमासपूर्ववर्तिनोऽधिमासस्य सर्वथा प्राकृतत्वखण्डनपुरस्सरं गणितदृष्ट्या यत् कर्मानर्हत्वं साधितं तन्न युक्तम्। यतो हि—गणितेनाधिमासक्षयमासयोर्ज्ञाने जाते तयोः कदा कस्य शुद्धत्वं कदा च कस्याशुद्धत्वमिति निर्णेतुं धर्मशास्त्रमेव प्रभवति। अत्र प्राकृतशब्दस्य अधिमासार्थ एव गृहीतः। स बलाद् गृहीत इवाभाति। प्राचीनार्षवचनानां क्षयमासपूर्ववर्तिनोऽधिमासस्य प्राकृतत्वप्रतिपादनपूर्वकं कर्मानर्हत्वप्रतिपादनमपि सहेतुकं वर्तते। देशाचारदृष्ट्यापि निबन्धकारादीनां प्रामाण्यं जागर्त्येव।

ग्रन्थान्ते मलमासक्षयमासादीनां कर्मसम्बन्धेन या व्यवस्था प्रतिपादिता, सा महदुपकारिणी। क्षयाधिमासाधिकृतस्य विवादग्रस्तविषयस्य विचारसरणौ ग्रन्थेनानेन कोऽपि नवीनः पन्था अङ्गीकृत इति तदर्थं ग्रन्थकारः साधुवादैः समाज्यते॥

व्रजवल्लभद्विवेदः।

# सम्पादकीयम्

**त्रिभाषानियमः संस्कृतं च**

भारतीयेन प्रशासनेन माध्यमिकशिक्षायामधुना त्रिभाषानियम प्रवर्तितः। तदनुसारं माध्यमिककक्षास्वधीतिनश्छात्रास्तिस्रो भाषा अनिवार्यरूपेणाध्यापयिष्यन्ते। ताश्च आङ्ग्लभाषा, हिन्दी, प्रान्तीया च काचन भाषेति। अत्र संस्कृतभाषाऽत्यन्तमुपेक्षिता, आङ्ग्लभाषा च व्यतीतेष्वपि विधाननिर्माणानन्तरं पञ्चदशवर्षेषु पूर्वतोऽप्यधिकतरं प्राधान्यं भजते। भारते देशे विभिन्नेषु प्रान्तेषु च परस्परं हिन्दीभाषया तत्तत्प्रान्तीयभाषाभिश्च सर्वो व्यवहारः प्रचलिष्यतीति निश्चये सत्यपि कृते नाद्यापि विदेशीया आङ्ग्लभाषा जहाति चेतांसि प्रशासनाधिकृताम्। भारतीयताया उन्मूलनकरी भाषा रक्ष्यते, संरक्षिका च संस्कृतभाषा तिरस्क्रियत इत्यहो विधिविडम्बनम्।

भारतीयसंघशासनस्य संविधानेऽष्टम्यामनुसूच्याम्—"आसामी, उड़िया, उर्दू, कन्नड, काश्मीरी, गुजराती, तामिल, तेलुगु, पंजाबी, बंगला, मराठी, मलयालम, संस्कृत, हिन्दी" इत्येताश्चतुर्दशभाषा राष्ट्रभाषात्वेनाङ्गीकृताः, यासु संस्कृतभाषाऽन्यतमा। अन्ताराष्ट्रीयव्यवहारेष्वाङ्ग्लभाषायाः, अन्तर्प्रान्तीयव्यवहारेषु हिन्दीभाषायाः, प्रान्तीयव्यवहारेषु च तत्तत्प्रान्तीयभाषाणामुपयोगो भविष्यति। अस्यां स्थितौ व्यवहारे कुत्राप्युपयोगमलभमानायाः प्राचीनायाः संस्कृतभाषायास्तत्र समावेशे किं प्रयोजनम्?

संविधाने चतुर्दशभाषासु हिन्दीभाषा मुख्यतमाऽङ्गीकृता। सा शनैः शनैराङ्ग्लभाषायाः स्थानं गृह्णीयादित्येतदर्थं तस्याः शब्दभाण्डाराय मुख्यतया संस्कृताद् गौणतया चान्यभाषाभ्यः शब्दग्रहणेन तस्याः समृद्धिसम्पादनं संघस्य कर्तव्येषु परिगणितं संविधानस्य ३५१ तमेऽनुच्छेदे। न केवलं हिन्दीभाषायाः, अपि तु सर्वासामप्येतासां भाषाणां समृद्धिः संस्कृतायत्तेति निश्चप्रचं जानाति सर्वो लोकः। भारतस्य सांस्कृतिकं धार्मिकमैतिहासिकं च निधानं संस्कृतभाषायामेव सर्वात्मना सुरक्षितं तिष्ठति। सर्वेषां राज्यानां तत्रत्याया जनताया भाषाणां चैकतास्रोतस्तत एव प्रवहद् दृश्यते। दक्षिणभारते हिन्दीभाषाया विरोधो दृश्यते, न तु संस्कृतस्य। जननप्रभृतिमरणपर्यन्तं सम्पाद्यमानेषु संस्कारेषु, व्रतोपवासादिषु, सांस्कृतिकेषु धार्मिकेषु च पर्वोत्सवादिषु

भारतीयजनताया जीवनं संस्कृतभाषया सर्वात्मना ओतं च प्रोतं च दृश्यते। रामायणमहाभारतयोः पुराणादीनां च कथाभिर्भारतीय आत्मा साहित्यं चानुप्राणितम्। न केवलं भारतं वर्षम्, अपि तु भारत-यूरोपीयभाषापरिवारदेशाः, दक्षिणपूर्व-एशियास्था देशाश्चास्या एव भाषाया महिम्ना काममप्यात्मीयतामनुभवन्ति भारतेन सह। प्राचीनाया अपि संस्कृतभाषाया एतद्वैशिष्ट्यमेव तस्या राष्ट्रभाषात्वप्रयोजकमङ्गीकृतं संविधाननिर्मातृभिः।

अस्याः संस्कृतभाषाया उन्नत्यै प्रशासनेन संस्कृतायोगः संघटित आसीत्। तत्परामर्शमनुसृत्य तस्या भाषायाः प्रचाराय प्रसाराय चानेकानि कार्याण्यधुनापि संपाद्यन्ते। किन्तु तानि परम्परागतसंस्कृतशिक्षणसंस्थाः, विश्वविद्यालयगतसंस्कृतविभागांश्च केवलमभिव्याप्नुवन्ति। माध्यमिकशिक्षाग्रहीतृभ्यः संस्कृतशिक्षाऽनिवार्यरूपेण प्रदेयेति संस्कृतायोगस्य प्रस्तावो नाद्यापि कार्यरूपेण परिणतिं भजते। प्रशासनेन प्रवर्तितो नूतनस्त्रिभाषानियमस्तु तस्य प्रस्तावस्य विनाशक एव।

आङ्ग्लानां शासनकाले संस्कृतभाषा अरब्यभाषा चैकस्यामेव कोटौ परिगण्येते स्म। तादृश एव व्यवहारो धर्मनिरपेक्षस्य भारतीयसंघस्य संचालकै राजपुरुषैरद्यापि क्रियते। इस्लाम-खीष्ट-सिखधर्मानुयायिनः किमर्थं संस्कृतं पठेयुरिति प्रश्नो जागर्तितरां तेषां समक्षम्। वयमत्र ब्रूमः—साम्प्रतं विभिन्नधर्मानुयायिनामेषां जनानां पूर्वे पुरुषाः परिस्थितिविशेषेषु विभिन्नानेतान् सम्प्रदायानङ्गीचक्रुः। तेषां चास्माकं च पितरः समानधर्मानुयायिन एवासन् पूर्वम्। विदेशीयेन शासनेन साम्प्रदायिकं विद्वेषमुद्भाव्यते स्म स्वार्थसाधनाय। धर्मनिरपेक्षे राज्ये स्वस्वसम्प्रदायानुसारं धार्मिकाणि कृत्यानि सम्पादयन्तु नाम सर्वे जनाः, किन्तु भारतस्य प्राचीनेतिहाससाहित्यनिर्माणे सर्वेषामस्माकं पूर्वपुरुषाणां समानमेव रिक्थमासीदित्यभिमानस्य स्फूर्तिर्यथा सर्वेषु भारतीयेषु संजायेत, तया च स्फूर्त्या सांस्कृतिकमैक्यं निर्मीयेत, तेन च सांस्कृतिकेनैक्येन धर्मनिरपेक्षस्य राज्यस्य दार्ढ्यं संपाद्येत, तथा प्रयतनीयमेव शासनेन। एतच्च कार्यं संस्कृतभाषाया अनिवार्येणाध्ययनेन यथा सुशकं स्यात्तथा नान्येन केनचिदुपायान्तरेण।

संस्कृतभाषा नाम सम्पूर्णाया भारतीयजनतायाः पूर्वपुरुषाणां श्रद्धास्पदं भाषा। "उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यादीनि सहिष्णुतायाः पोषकाणि सुभाषितानि तत्रैव दृश्यन्ते। यहूदिनः पारसीकाश्च विधर्मिभिर्वित्रासिता भारतं शरणस्थानममन्यन्त पूर्वस्मिन् काले। साम्प्रतमपि नृशंसेन चीनशासनेनाक्रान्ता भोटदेशीया जना अत्र शरणमलभन्त। विचारस्वातन्त्र्यम्, धार्मिकी सहिष्णुता, शरणागतवत्सलता च भारतस्य स्वाभाविकं रिक्थम्। एते गुणा भारतीयेषु

सर्वधर्मानुयायिषु जनेषु यथा नाम दार्ढ्येनाहिताः स्युस्तदर्थमध्येयं संस्कृतम्। सत्यमेतत् सत्वरमेव प्रत्यक्षीक्रियतां भारतीयशासनाधिकृतैः। सर्वप्रकारिकाया एकतायाः कियन्मूल्यमिति प्रचलितेऽस्मिन् चीन-पाकिस्तान-भारतसमरप्रसङ्गेऽनुभूतमेव नूनम्।

त्रिभाषानियमेन संस्कृतमुन्मूलितं स्यादित्यत्र विषये सर्वप्रथमं राजस्थानराज्यपालेन महामान्येन डा०सम्पूर्णानन्दमहोदयेन जनता प्रशासनं च प्रतिबोधितम्। तदर्थं धन्यवादार्हास्ते। वाराणस्यां वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतिभिः श्रीसुरतिनारायणमणित्रिपाठिमहोदयैरन्यैश्च संस्कृतार्पितजीवनैर्विद्वद्भिः सम्भूय संस्कृतभाषायाः परिरक्षणाय इमे विकल्पाः परिकल्पिताः—त्रिभाषानियमस्य स्थाने चतुर्भाषानियमः करणीयः, अथवा आङ्गलभाषया सह संस्कृतभाषाऽध्याप्येत, अथवा हिन्दीभाषया सह संस्कृतभाषाऽध्याप्येत, अथवा क्षेत्रीयभाषाभिः सह संस्कृतमध्याप्येत, अथवा कोऽप्यन्यः प्रकारः संस्कृतभाषाध्ययनाय यथासौविध्यं प्रशासनेनैव स्थिरीकरणीय इति।

अत्र प्रशासनेन नूनमवधातव्यम्॥



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचना प्रकाश्यन्ते। एतदर्थं पुस्तकद्वयमपेक्षितम्।

७. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः—"सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी—२" इति सङ्केतेन विधेयः।

---

प्रकाशक—अनुसन्धान संचालक, अनुसंधान संस्थान, संस्कृत विश्वविद्यालय, वाराणसी।

मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, काशीपुरा, वाराणसी।